॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः । हरिः ॐ । रामंसत्यवतीसूनुंप्रणम्यश्रीगुरूनपि ।
तत्वसंख्यानटीकायाव्याख्यांकुर्वेयथामति ॥ प्रारिप्सितग्रंथस्यनिर्विघ्नपरिसमाप्त्याद्यर्थंशिष्टाचारपरंपराप्राप्तंस्वेष्टदेवतानमन
रूपंमंगलमाचरितं व्यवहिताव्यवहितमानसशिष्यशिक्षायैग्रंथादावुपग्रंथयंश्चिकीर्षितंप्रतिजानीते ॥ लक्ष्मीपतेरिति ॥ करि
ष्यइत्युत्तमपुरुषप्रयोगादहमितिलभ्यते । अहंतत्वसंख्यानव्याख्यानंकरिष्यइत्यन्वयः । लक्ष्मीपतेः लक्ष्म्याः रमायाः पतिः
भर्ता तस्य । रमारमणस्य । पदांभोजयुगं अंभसि उदके जायेतेइतितेतथा । सप्तम्यांजनेर्डः । पदे पादौ अंभोजेइव
पदांभोजे । तयोर्युगं युग्मं । पादकमलद्वयं । गुरोः साक्षात्अक्षोभ्यतीर्थस्य । यद्वा एकवचनंबहुवचनार्थे । अक्षोभ्यती

॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ हरिः ॐ ॥

लक्ष्मीपतेःपदांभोजयुगंनत्वागुरोरपि । करिष्येतत्वसंख्यानव्याख्याननातिविस्तरं ॥ १ ॥

र्थपद्मनाभतीर्थसर्वज्ञाचार्याणां । यद्वा त्रिरावर्तितगुरुपदेनत्रयाणांलाभइतिमंतव्यं । पदांभोजयुगमपि । नत्वा नमस्कृत्य ।
तत्वसंख्यानव्याख्यानं तत्वसंख्यानस्य तन्नामकग्रंथस्य व्याख्यानं विवृतिं । नातिविस्तरं अति अत्यंतं विस्तरः शब्द
प्रपंचोयथानभवेत्तथेतिक्रियाविशेषणं । तथा करिष्ये इतियोजना । शब्दप्रपंचेविवक्षिते स्तृणातेः "प्रथनेवावशब्द" इति
घञोनिषेधात् "ऋदोर"बित्यपिप्रत्यये विस्तरइतिरूपं । सचशब्दस्यविस्तरइत्यमरः । ग्रंथारंभसमयेसकलवाङ्मनसदेवता
यामंगलदेव्यानमनस्य "मनोवृत्तेस्तत्प्रवणताहिवंदन"मितिसुधोदितस्यचित्तासक्तिरूपस्यावश्यकत्वात् तत्पृथगभिवंदनस्या

तिसुष्ठ्वाचारादिसापेक्षस्यविलंबेनभगवत्प्रसादासादकत्वेनायोगाद्भगवदुपसर्जनतयैवसावंदनीयेतिबोधयितुं ; लक्ष्मीपतेरित्युक्तं । तथैवचवचोगीताभाष्ये द्वादशेऽध्याये "क्लेशोधिकतरस्तेषामव्यक्तासक्तचेतसां । अव्यक्ताहिगतिर्दुःखंदेहवद्भिरवाप्यत"इतिश्लोकव्याख्यावसरे "अव्यक्तागतिर्दुःखंह्यवाप्यते" । गतिर्मार्गः । अव्यक्तोपासनद्वारकोमत्प्राप्तिमार्गोदुःखमाप्यतइत्यर्थः । अतिशयोपासनसर्वेंद्रियातिनियमनसर्वत्रसमबुद्धित्वसर्वभूतहितेरतत्वातिसुष्ठ्वाचारसम्यग्विष्णुभक्त्यादिसाधनसंदर्भमृतेनाव्यक्तापरोक्ष्यं । तद्दतेचनविष्णुप्रसादः । सत्यपितस्मिन्नसम्यग्भगवदुपासनमृते । नर्तेचतंमोक्षः । विनाऽव्यक्तोपासनंभवत्येवभगवदुपासकानांमोक्षइतिक्लेशिष्ठोयंमार्ग"इत्यादि यदभियुक्तैर्बहुभिः "क्लेशोधिकतरस्तेषा"मित्याद्युदाहृत्य "पृथग्प्रमावंदनस्यानिषिद्धत्वा"दित्याद्युक्तं तत्तदसौलभ्यविवक्षयैवेतिनैतद्भाष्याननुगुणमितिगुणवद्भिःसंतोष्टव्यं । नत्वेतित्वाप्रत्ययेनपूर्वकालीनत्वंनमनस्य, तथोत्तरकालिकत्वंग्रंथकरणस्यच बोध्यतइत्येककर्तृकयोर्नमनकरणयोः "स्नात्वाभुङ्क्ते" इतिवदंगांगिभावोज्ञेयः । तत्रापिमुख्यामुख्योभयनमनस्यकरणप्रागभावोपिज्ञेयः । लक्ष्मीपतित्वेनप्रथमंग्रथनेन नम्यपादांभोजस्यभगवतो विशिष्टेष्टत्वाधिकृतत्वादि सूचितमितिमंतव्यं । ननु पदांभोजयुगमितिकथंसमासः । समर्थःपदविधिः । पदसंबंधीयोविधिःसमासादिरूपः ससमर्थाश्रितोबोध्यइतिसूत्रार्थः । असमर्थभिन्नंयत्पदंतत्समर्थमित्युच्यते । असमर्थंच तत् यत्सापेक्षं । सापेक्षमसमर्थमित्युक्तेः । यदितरसापेक्षंतदसमर्थमितितदर्थः । तथाचपदेइत्युक्ते कस्यपदेइत्यपेक्षाजायते । तदर्थंलक्ष्मीपतेरितिवक्तव्यं । एवंचपदपदस्यलक्ष्मीपतिपदसापेक्षत्वेनासमर्थत्वान्नतस्यांभोजशब्देनसमासःसंभवतीतिचेन्न ।

यथा पितापुत्रइत्यादिशब्दश्रवणसमनंतरं कस्यपिताकस्यपुत्रइतिनियमेनाकांक्षाजायते । तथा पदेइत्युक्ते कस्यपदेइतिस्वारसिकाकांक्षायाजायमानत्वेन अस्य "देवदत्तस्यगुरुकुलं चैत्रस्यदासभार्या शरैःशातितपत्र"इत्यत्रेवनित्यसापेक्षत्वात्समासः साधुः । सापेक्षमित्यस्यतूत्थाप्याकांक्षावद्विषयत्वान्नदोषः । यद्वा लक्ष्मीपतेःपदांभोजयुगमित्येकंपदं । नचनिश्चितभेदस्यदर्शनेस्तिपुराणगमित्येतदनुव्याख्याव्याख्यानसुधायां "द्वितीयाभिप्रायेणतुभेदस्यदर्शनइतिसमासः । षष्ठ्याआक्रोशइत्यलुक् । निश्चितंपरीक्षितंचतद्भेदस्यदर्शनंचेतितथोक्तं । तत्रस्वाभिप्रायेणाक्रोशःपराभिप्रायेणनिश्चितत्वमित्यविरोध"इत्युक्तेः । एवंच तत्रयथारामकृष्णादिरूपभेदस्यनिंदितत्वेनस्वाभिप्रायेणाक्रोशविषयत्वात् "षष्ठ्याआक्रोश"इत्यनेन "चोरस्यकुल"मित्यत्रेवालुक्समासः तथाऽत्रापिभगवतस्तदवयवानांचभेदः "देवदत्तस्यकंबल"इत्यत्रेवषष्ठ्याप्रतीतोप्यानंदमयाधिकरणीय "नचावयवत्वविरोधः । नेहनानास्तीतिश्रुतेरवयवाद्यभेदा"दितिन्यायविवरणोदीरित "नेहनानास्तिकिंचने"त्यादिश्रुत्या, तथा "सर्वतःपाणिपादंत"दित्यादिश्लोकव्याख्यावसरेत्रयोदशाध्यायगीतातात्पर्योदाहृत "सर्वतःपाणिपादंतत्सर्वतोक्षिशिरोमुख"मित्यारभ्य "केशादिष्वपिसर्वत्रयतःपाण्यादिशक्तिमा"नित्यंतप्रमाणेन, "सशिरःसदक्षिणःपक्ष"इत्यादिश्रुत्याचानिंदितइत्याक्रोशविवक्षयोक्तसूत्रेणालुक्समासोपपत्तेः । पदांभोजमित्यनुक्त्वायुगमितिवचनेनद्वयोरपि "सुवरितिप्रतिष्ठे द्वेप्रतिष्ठे द्वेएतेअक्षरे"इत्येतद्बृहदारण्यकोपनिषद्भाष्ये "स्वित्यानन्दःसमुद्दिष्टोवरितिज्ञानमुच्यते । मोक्षदानेनतद्दानात्सुवरस्यपदद्वयं । दक्षिणश्चैवसव्यश्चे"त्यत्रभगवद्दक्षिणसव्यपादयोःक्रमेणानंदज्ञानप्रदत्वोक्तेरानंदादिप्रदत्वेनानंदादिकामानांतच्चरणद्वंद्वनम

स्यायाआवश्यकत्वेनतत्कर्तव्यतांद्योतयामासेतितात्पर्यंज्ञेयं । यथादेवइतिप्रमाणाद्देवतानतिंविधाय "तथागुरा"वित्यंशशा सितांगुरुनतिमभिनयेनदर्शयति ॥ गुरोरिति ॥ अपिशब्दःसमुच्चये । ब्रह्ममीमांसादिशास्त्रेणैवाभीष्टसिद्धेरिदंप्रकरणंव्यर्थ मित्याशंकांपरिहरन्नुपोद्घातमाह ॥ मुमुक्षुणेति ॥ मुचेरिच्छायांसनि, द्वित्वे, अभ्यासेकृतेहलादिशेषेच "सनाशंसभिक्षउ" रित्युप्रत्ययेमुमुक्षुरितिरूपं । मोक्षापेक्षावतेत्यर्थः । परमात्मा नारायणः । जगदुदयादिनिमित्तत्वेन जगतो रमाब्रह्मा दिचेतनाचेतनात्मकस्यप्रपंचस्य। उदयः वियदधिकरणव्युत्पादितन्यायेनपराधीनविशेषावाप्त्यादिरूपोत्पत्तिः । आदिशब्दघटि

**मुमुक्षुणाखलु परमात्माजगदुदयादिनिमित्तत्वेनावश्य**
**मवगंतव्यइति सकलसच्छास्त्राणामविप्रतिपन्नोर्थः ।**

तबहुव्रीहिणा स्थित्यादीनांसंग्रहः । तद्गुणसंविज्ञानोबहुव्रीहिः । मूलेग्रांतेवक्ष्यमाणरीत्या, प्रमाणैश्च तत्रतत्रविशिष्टाष्टकस्या ध्यवसायात्तदनुरोधो विनैतंबहुव्रीहिंनसंभवतीतिमंतव्यं । निमित्तत्वेनेत्युपादानत्वं व्यावर्तयति । अवगंतव्यः ज्ञातव्यः । इति एतत्प्रमेयं । सकलसच्छास्त्राणामविप्रतिपन्नोर्थः अविरुद्धोर्थः । इदमिति अवगंतव्येत्येतत्कृत्यर्थावगमनंपरामृ शति । तेनार्थशब्दस्यपुँल्लिंगत्वादयमितिपरामर्शेकर्तव्येकथमिदमितिनपुंसकलिंगेनपरामर्शइतिशंकानवकाशः । एतेनपरा परतत्वेमुख्यामुख्यविषयौ । मोक्षःपरमप्रयोजनं । अवांतरंपरापरतत्वज्ञानं । मुमुक्षुरधिकारी । यथायोग्यंसंबंधः । इत्यारं

भणीयत्वप्रयोजकानुबंधचतुष्टयमुक्तंभवति । इदंच जगदुदयादिनिमित्तत्वेनभगवज्ज्ञानंच । अवांतरानेकभेदभिन्नस्य अवांतराः प्रत्येकंविद्यमानाः अनेके बहवः भिद्यंतएभिरितिभेदाः । भिनत्तेर्बाहुलकात्करणेघञ् । भावत्वाभावत्वनित्यत्वा नित्यत्वादयः । तैर्भिन्नस्य विभक्तस्य । जगतः परतंत्रतत्वस्य विज्ञानमपेक्षते । उत्पत्त्यादेश्चभावत्वाभावत्वादिनाविभक्ते जगतिज्ञातव्यतया तन्निमित्तत्वज्ञानस्यतज्ज्ञानाधीनत्वादितिभावः । इतिशब्दोहेत्वर्थे । इदंचजगतोविज्ञानमपेक्षतइति हेतोः । जगदपि तथा परमात्मवत् । अवगंतव्यं । भावत्वाभावत्वादिनाऽवगंतव्यमितिवा । तदिति भगवत्परामर्शः ।

इदंचावांतरानेकभेदभिन्नस्य जगतोविज्ञानमपेक्षतइति जगदपितथाऽवगंतव्यं । तदिदंप्रधानांगभूतंतत्व द्वयं शास्त्रेविक्षिप्यप्रतिपादितं शिष्यहिततयासंगृह्यप्रतिपादयितुं प्रकरणमिदमारभते भगवानाचार्यः ।

इदमिति जगत्परामर्शः । प्रधानांगभूतं मुख्यामुख्यरूपं । तत्वद्वयं । शास्त्रे वेदादौ । विक्षिप्यप्रतिपादितं तत्रतत्र प्रतिपादितं । शिष्यहिततया शिष्येभ्योहितमिष्टंशिष्यहितं तस्यभावःशिष्यहितता । तया । वैशिष्ट्यंतृतीयार्थः । तथा चशिष्येष्टत्वविशिष्टंयत्संगृह्यप्रतिपादनमितितृतीयांतार्थस्यप्रतिपादनलक्षणतुमुन्प्रकृत्यर्थेऽन्वयः । संगृह्यप्रतिपादनस्यशिष्य हितत्वात् । प्रतिपादयितुं तादृशप्रतिपादनंकर्तुं । इदंप्रकरणमारभते भगवान् स्वोचितैश्वर्यादिषड्गुणशालीश्रीमदा चार्यः । शिष्यहिततयेत्यस्यारभतइत्यारंभणेवाऽन्वयः । मूलेमंगलप्रतिपादकश्लोकाद्यभावादाचार्यैर्नकृतमेवमंगलमितिम

तिमाऽऽशंकते ॥ नन्विति ॥ प्रकरणादौ स्वतंत्रमस्वतंत्रंचेत्यादिप्रकरणादिभागे । किमपि कायिकवाचिकमानसिकान्यत ममपि । आचर्यतेज्ञाप्यतेऽनेनेत्याचरणं । मंगलाचरणं वंदइत्यादितच्चिह्नं । कस्मान्नानुष्ठितं किंहेतुकमननुष्ठानमित्यर्थः । मंगलस्याननुष्ठानेहेतूउत्प्रेक्षयित्वाऽऽद्यंनिराह ॥ नतावदिति ॥ तत् मंगलं । अफलं नविद्यतेफलमस्यतदफलं । निष्फलं नैवेत्यर्थः । अन्यफलकत्वस्योत्तरत्रपराकरिष्यमाणत्वात्तावच्छब्दः । कुतोननिष्फलमित्यतआह ॥ प्रेक्षावद्भिरिति ॥ प्रेक्षायेष्वस्तितेतथा । तैर्ज्ञानिभिः । अनुष्ठितत्वात् कृतत्वात् । नह्येकदैवसर्वेषांविपश्चितांनिष्फलेकर्मणिसचेतनःप्रवृत्तिसं

ननु प्रकरणादौमंगलंकिमपिकस्मान्नानुष्ठितं । नतावत्तदफलमेव । प्रेक्षावद्भिरनुष्ठितत्वात् ।
नापिप्रारिप्सितपरिसमाप्त्यादिव्यतिरिक्तफलं । नियमेनप्रारंभे( अनुष्ठितत्वात् )तदनुष्ठानात् ।

भावयेदितिभावः । द्वितीयंनिराकरोति ॥ नापीति ॥ प्रारब्धुमिष्टंप्रारिप्सितं । तस्ययापरिसमाप्तिः सैवादिर्येषांप्रचयमुखा नां तेप्रारिप्सितपरिसमाप्त्यादयः । तेभ्योव्यतिरिक्तमन्यत्फलंयस्य तत् प्रारिप्सितपरिसमाप्त्यादिव्यतिरिक्तफलं । तत्र हेतुः नियमेनेति ॥ अत्रेमौप्रयोगौभवतः । मंगलं ननिष्फलं । प्रेक्षावद्भिर्नियमेनानुष्ठीयमानत्वात् । यागादिवत् । मंगलं नसमाप्तीतरफलकं । ग्रंथारंभेनियमेनानुष्ठीयमानत्वात् । यद्यदारंभेनियमेनानुष्ठीयते नतत्तत्समाप्त्यादीतरफलकं । यथा विवाहोत्सवाद्यारंभेऽनुष्ठीयमानविघ्नराजार्चनमिति । अत्राद्येप्रयोगे ईक्षावदनुष्ठितत्वादित्येवोक्तौबौद्धकृतचैत्यवंदनादौव्य

भिचारः । तद्वारणायप्रेतिव्याशिंषन्नीक्षां । तेनचेक्षायाःप्रकृतकर्मणिप्रकृतेष्टसाधनत्वप्रकारकप्रमारूपत्वद्योतनात् । प्रेक्षावद्भिरितिबहुवचनंस्पष्टार्थं । यदिप्रेक्षावच्छब्दोऽखंडः तदाकेनचित्प्रेक्षावतैवकृतेजलताडनादौव्यभिचारः । तत्परिहारायप्रेक्षावद्भिरितिबहुवचनं । अनुष्ठितत्वंकृतिविषयत्वं । तच्चसाध्यतयाविवक्षितं । तेननोद्देश्यत्वेनकृतिविषयेफलेव्यभिचारः । द्वितीयप्रयोगे ग्रंथारंभेऽनुष्ठीयमानत्वादित्येवोक्ते तत्समयएवदैवात्कृतेकंडूयनादिकेकर्मणिव्यभिचारः । तद्वारणायनियमेनेत्युक्तं । अत्रारंभेनियमेनानुष्ठीयमानत्वादित्येतन्मात्रादाने दर्शारंभेनियमेनानुष्ठीयमानायामन्वारंभणेष्टौव्यभिचारः । तद्वारणायप्रारंभेनियमेनानुष्ठीयमानत्वादिति । अस्यप्रारिप्सितपरिसमाप्त्यादिव्यतिरिक्तोद्देशेनाननुष्ठीयमानत्वादित्यत्रता

उच्यते । अनुष्ठितमेवभगवतामंगलं । मानसादेरपि तस्यसंभवात् ।

त्पर्यंबोध्यं । एतेन यथाश्रुतेग्रंथेचोक्तस्थलेव्यभिचारवारणायसमाप्तिकामैरितिविशेषणे तेनैवहेतुनासमाप्तिफलकत्वसिद्धेः परिशेषवैयर्थ्यमितिशंकानवकाशः । अनेन मंगलंसमाप्तिफलकं । समाप्त्यन्याफलकत्वेसतिसफलत्वादितिपरिशेषोबोध्यः । ग्रंथेनिवेशनस्य मंगलरूपत्वस्य मंगलव्यापकत्वस्यवाऽभावेन नमंगलाभावःशक्यांगीकारः । मंगलस्यानेकविधत्वेनमानसादेरपिसंभवादितिसमाधत्ते ॥ उच्यतइति ॥ समाधानमितिशेषः । भगवता आचार्येण । अनेनपूर्वोक्तानुमानानांसिद्धसाधनतोक्ताभवति । तस्य मंगलस्य । नन्वनुष्ठितमेवेतिकथंनिश्चयः । मानसादेःसंभावितत्वेपिविनाप्रमाणंनिष्कर्षस्यदुष्क

रत्वादित्यतआह ॥ तच्चेति ॥ तत् मंगलानुष्ठानं । नकेवलंसंभावितं किंत्वनुमीयतेचेत्यर्थः । अनुमानप्रकारस्तु विमतो ग्रंथारंभःकृतमंगलः । परमास्तिककृतग्रंथत्वात् । यदेवंतदेवं । यथासंप्रतिपन्नं । यद्वा भगवान्भवतिग्रंथारंभेकृतमंगलः । कृतप्रकरणत्वेसतिपरमास्तिकत्वात् । मन्वादिवदितिवा । नास्तिकग्रंथारंभेव्यभिचारवारणायाद्यहेतौ आस्तिकेतिविशेषणं । आस्तिकानामपिकेषांचिदालस्यादिनामंगलानुष्ठानादृष्टेः परमेति । आस्तिकानामपिकेषांचित्प्रकरणादिकरणादर्शनादनैकां त्यवारणायद्वितीयानुमानेहेतौसत्यंतंविशेषणं । मंगलानुष्ठानमनुमीयतइत्युक्तावनत्यंतसमाहितमनस्कंपूर्वपक्षिणमिदानींत

तच्चपरमास्तिकत्वादनुमीयते । यच्चायंस्वातंत्र्यादिविशिष्टस्य
विष्णोरादितएवसंकीर्तनंकरोति किंततोऽन्यन्मंगलंनाम ।

न्मंगलस्यग्रंथेनिवेशनमपिप्रात्यक्षिकमित्युक्त्यातोषयति ॥ यच्चायमिति ॥ अयं परमास्तिकःश्रीमदाचार्यः । स्वातंत्र्यादि विशिष्टस्य स्वतंत्रस्यभावःस्वातंत्र्यं तदेवादिर्येषांभगवदादिशब्दार्थभूतानामैश्वर्यादीनांव्याप्त्यादीनां तेस्वातंत्र्यादयः । यद्वा आदिशब्देनतत्वतापरिग्रहः । मूले"स्वतंत्र"मितिस्वतंत्रशब्दोगुणसर्वस्वोपलक्षकइतिकृत्वा उपलक्षितानांगुणानांग्रह णार्थमादिशब्दप्रयोगइतिवा । तैर्विशिष्टस्य विष्णोः । आदितः आदौ । आद्यादित्वात्तसिःसप्तम्यर्थे । प्रथमभागइत्यर्थः । संकीर्तनं स्वतंत्रमस्वतंत्रंचद्विविधंतत्वमिष्यते । स्वतंत्रोभगवान्विष्णुरित्येवंरूपंशब्दप्रयोगं करोतीतियत् ततः तादृश

शब्दप्रयोगात् । अन्यत् अपरं । मंगलं मंगलनिवेशनं नाम किं । नकिमपीत्यर्थः । अन्यथा तत्वस्यसामान्यतोविभागे
नोद्देशस्यकर्तव्यतया तत्वंद्विविधमित्यभिधाय तच्चस्वतंत्रमस्वतंत्रंचेत्यभिधातव्यंस्यादितिवाक्यशेषः । उद्देश्यविधेयभावस्थ
लउद्देश्यप्राथम्यस्यौचित्यात् । यच्छब्दयोगःप्राथम्यमित्याद्युद्देश्यलक्षणं । तद्वृत्तमेवकारश्चस्यादुपादेयलक्षणमित्युक्तेः ।
अतएव "वृद्धिरादै"जित्यादौचोद्देश्यप्राथम्यस्यवैहित्यात् आदैज्वृद्धिरित्यादिनिर्देशएवपाणिनिनाकर्तव्यः तथापिपूर्वनिबद्धो
वृद्धिशब्दःसंज्ञांविदधदपिमंगलार्थोपिभवतीति मयामंगलमपिकृतंनिबद्धंचेतिसूचयितुमादौनिबबंधेतिनिबंधकाराःसमाद
धिरे । नचवाच्यं "अपृक्तएकाल्प्रत्ययः परमपरंचेतिद्विविधंसामान्य"मित्यादिप्रयोगदर्शनात्तस्यानित्यत्वमिति । उक्तलक्ष

अन्यपरमपितद्भक्त्यानुष्ठितंस्वभावात्संपादयत्येवाखिलमंगलानीति ।

णबलात्सर्वत्रोद्देश्यस्यप्राथम्यमावश्यकमेव । यत्पुनर्यत्रक्वापिवैपरीत्यदर्शनं तत्रविशेषप्रयोजनसूचनार्थंतदिति । यत्रचपुन
र्विनापिप्रयोजनंतथोपलभ्यते तत्रस्वतंत्रस्यर्षेःनियंतुमशक्यत्वाद्योजनायामुद्देश्यस्यप्राथम्यंसंपाद्यमेवेतितांत्रिकलेखायास्तत्प्रा
थम्यस्यानुन्मथनात् । अतएवटीकायां "आदित" इत्युक्तं । तत्वविभागकथनपरस्यकथंमंगलपरतेत्यतआह ॥ अन्यपरम
पीति ॥ तत् स्वातंत्र्यादिविशिष्टस्यविष्णोःसंकीर्तनं । अन्यपरमपि अन्यत्निरंतरायपरिसमाप्त्यादिव्यतिरिक्तं परमुद्देश्यं
यस्य संकीर्तनस्य तत्तथेत्यर्थः । भक्त्या माहात्म्यज्ञानपूर्वकसुदृढस्नेहेन । स्वभावादेव सहजसामर्थ्यादेव । अखिलमं

गलानि । प्रयोजनप्रापकत्वेनमंगलानामखिलता । खिलानि अफलपर्यवसायित्वाद्दृढान्युच्यंते । तथाविधानिनभवंतीत्यखिलानि । फलपर्यवसायीनीतियावत् । बहुवचनेन विघ्नानांबाहुविध्यात्तत्समसंख्यत्वेनतदुत्पाटनपाटवंप्रकटीचकारेति ज्ञेयं । संपादयति सम्यगुपार्जयति । अन्यार्थंनीयमानस्याप्यंभःकुंभादेरन्येषांमंगलसूचकत्वदर्शनादितिभावः । "वृद्धिरादैच् अथातोब्रह्मजिज्ञासा अथातोधर्मजिज्ञासा अथशब्दानुशासनं सिद्धेशब्दार्थसंबंधः"इत्येवमादिबहुस्थलेषु संज्ञानंतर्याद्यभिधायकानामपिवृद्ध्यादिशब्दानांमंगलार्थतायाअपिचिरंतनव्याख्यातृभिर्व्याख्यातत्वान्नेयंव्याख्याऽदृष्टचरीतिकौतु

तत्रतावत्तत्वंसामान्यतोविभागेनोद्दिशति ॥ स्वतं
त्रमस्वतंत्रंचद्विविधंतत्वमिष्यते ॥ तत्वमनारोपितं ।

किमिभाव्यमिति इतिशब्देनशंकापरिहारसमाप्तिसूचकेनसूचयामासेतिध्येयं । तत्र वक्तव्यतयाबुद्धिसंनिहितेपूद्देशलक्षणविभागेषु । तावत् पूर्वं । तत्वं । सामान्यतः सामान्येन । विभागेनोद्दिशति । नाम्नासंकीर्तनंकरोतीत्यर्थः । नन्वनुद्दिष्टस्यलक्षणकथनासंभवेन, अलक्षितस्यचविभागकथनायोगेनच उद्देशानंतरंविभागात्पूर्वंसामान्यलक्षणस्यावश्यवक्तव्यस्यानुक्तेर्न्यूनतास्यादित्यतः मूलउद्देशेनैवतत्वसामान्यलक्षणमपिसूचितमित्याशयेनाह ॥ तत्वमनारोपितमिति ॥ अत्र यदनारोपितंतत्तत्वमित्यर्थः । अत्र प्रतीतत्वेसतीतिविशेषणंदेयं । तेनारोपाविषयेकूर्मरोमशशविषाणादौनातिव्याप्तिः । ननु

कूर्मरोम्णआरोपाविषयत्वंकथमितिचेत् शृणु। सर्वत्रारोपे "अधिष्ठानंचसदृशंतथ्यवस्तुद्वयंविना। नभ्रांतिर्भवतिक्वापि स्वप्नमायादिकेष्वपी"त्युक्तरीत्याऽधिष्ठानसदृशप्रधानस्यावश्यकत्वेन रोमांतराद्यधिष्ठानककूर्मरोमारोपेप्रधानभूतकूर्मरोम्णः कुत्राप्यभावेनारोपासंभवेनातद्विषयत्वसंभवात्। "यदिनामकूर्मरोमादिकमनारोपित"मितितत्वविवेकटीकायाअप्येषएवार्थोबोध्यः। यस्यासद्विशेषस्यकदापिनारोपइतिटिप्पण्यंतरभावोप्येवमेवबोध्यः। अस्यलक्षणस्यपर्यवसितमर्थमाह॥ प्रमितिविषयइतियावदिति॥ प्रमितिविषयइत्येतावद्यावदर्थजातंवक्ति तावदर्थजातंप्रतीतत्वेसतिआरोपाविषयत्वमित्यस्यार्थ इत्यर्थः। नन्वसतोपिप्रमितिविषयत्वात्तत्रातिव्याप्तिरितिचेन्न। द्विविधंविषयत्वं। ज्ञानासाधारणकारणसंनिकर्षाश्रयत्वरूपं,

प्रमितिविषयइतियावत्। तेन तस्यभावस्तत्वमित्यादिखंडनानवकाशः।

उल्लेख्यत्वरूपंचेति। तत्राद्यंनासत्यस्तीतिनातिव्याप्तिः। द्वितीयेसत्वप्रकारकेतिविशेषणान्नतत्रैवातिव्याप्तिः। एतेन असतोपिज्ञानविषयत्वस्यभगवत्पादैस्तत्रतत्रोक्तत्वात्कथंप्रतीतत्वविशेषणेनतन्निरासइतिशंकानिरासः। तत्वलक्षणकथनस्यफलमभिलपति॥ तेनेति॥ तेन रूढतत्वशब्दस्यपारिभाषिकलक्षणकथनेनेत्यर्थः॥ खंडनानवकाशइति॥ खंडनकारेणश्रीहर्षेण स्वग्रंथे "तत्वानुभूतिःप्रमे"तिप्रमाणलक्षणकथनावसरे "तस्यभावस्तत्वमित्युच्यते। प्रकृतंचतच्छब्दार्थः। नचात्रप्रकृतंकिंचिदस्ति। यत्तच्छब्देनपरामृश्येते"त्यादियत्खंडनंकृतं तदनवकाशइत्यर्थः। आदिशब्देन "तत्स्वतंत्रमस्वतंत्रंचेत्ये

तावतैवपूर्तेर्भावप्रत्ययवैयर्थ्य"मित्यादिखंडनग्रहः । यद्वा "पराक्त्वप्रत्यक्त्वविशिष्टवस्तुवाचिनोस्तत्वंपदयोरभेदविधानाय प्रयोक्तव्यत्वेन प्रकृततयोरप्रकृतत्वात्कथमेत"दित्यादिखंडनानवकाशइत्यर्थः । अथवा तस्यभावस्तत्वमित्यादियत्खंडनं विग्रहप्रदर्शनं तस्यानवकाशः । आदिपदेन सचासौत्वंचेत्यादिविग्रहग्रहः । अखंडपदत्वाभ्युपगमादितिभावः । इदंरजतमित्याद्यन्यथाख्यातिविषयेन्यायविदामस्माकंचसमंसमयंमन्वानःशंकते ॥ नन्विति ॥ कथमित्याक्षेपे । कथंनतत्वं नकथमपीत्यर्थः । तत्वंभवत्येवेतियावत् । तदुपपादयति ॥ नहीति ॥ इदंरजतमितिप्रतीतौ संसर्गारोपपक्षे धर्मी शुक्तिकादिः

ननुशुक्तिरजतादिकंकथंनतत्वं । नहिधर्मीवारजतत्वंवानप्र
मेयं । नापि तयोःसंबंधः । शुक्तिव्यक्तौरजतत्वस्यसनास्तीति

प्रकारस्तुरजतत्वं संबंधःसमवायः । तादात्म्यारोपपक्षे धर्मीतूक्तएव । प्रकारस्तुरजतं । तादात्म्यंसंबंधः । एवंच धर्मी शुक्तिशकलं नप्रमेयमितिन । किंतुप्रमेयमेवेत्यर्थः । तथा रजतत्वं । नप्रमेयमितिन । किंतुप्रमेयमेवेत्यर्थः । तयोः शुक्तिरजतत्वयोः । संबंधः समवायलक्षणः । नप्रमेयइति विपरिणमितलिंगेननञन्वेति । विशकलिततयातयोःसत्यत्वादितिभावः । विशकलिततयासत्यत्वेपिप्रकृतधर्मिधर्मसंबंधःसत्योनास्तीतिसिद्धांतिनआशयमाशंक्यपरिहरति ॥ शुक्तिव्यक्ताविति ॥ सः संबंधः । इदमुपलक्षणं । तादात्म्यारोपपक्षेरजततादात्म्ययोरन्यत्रसत्त्वमुपपादनीयं । शुक्तिव्यक्तौरजत

तादात्म्याभावोप्याशंकनीयइतिबोध्यं । किंतावता । नास्माकंक्षतिरित्याह ॥ माभूदिति ॥ रजतरजतत्वाभ्यांसंबंधःशुक्तौ माभूत् । मा भूदितिच्छेदः । नमाङ्योगइत्यडागमनिषेधात् । नह्येकत्रसंबंधविशेषेणासतस्तदन्यत्रतेनसंबंधेननास्तीतिसंभवतीत्युपपादनीयं । एवंचशुक्तिरूप्यस्यापितत्वतयानलक्षणेतद्वारकविषयत्वविशेषविवक्षाऽर्थवतीतिशंकाशयः । इतिशब्दः शंकासमाप्तौ । नवयंतार्किकसमसमयाइतिनास्माकमिदंदूषणमितिभाषते ॥ स्यादिदमिति ॥ आरोपितस्य आरोपप्रकारीभूयभासमानस्य । अन्यत्र । अधिष्ठानात् । सत्तां स्थितिं । इदंदूषणं विषयत्वविशेषसत्वप्रकारकत्वविवक्षानर्थक्यरूपं ।

चेन्माभूत् । नहिगृहेदेवदत्तोनास्तीत्येतावतानप्रमेयइति । स्यादिदमारोपितस्यान्यत्रसत्तामभ्युपगच्छतांदूषणं । अत्यंतासदेवरजतं दोषवशाच्छुक्तिकायामारोप्यतइतिवादेतुनायंदोषः । एतेन

अत्यंतासदेव सर्वदेशकालासंबंध्येवरजतं । दोषवशात् चाकचक्यादिरूपदोषवशात् । शुक्तिकायामारोप्यते सद्रजतत्वेनज्ञायते । इतिवादे एवंवदतामस्माकं । अयंदोषः उक्तानर्थक्यरूपोनेत्यर्थः । अस्मन्मतेशुक्तिरूप्यादेरत्यंतासत्त्वेन तत्रज्ञानासाधारणकारणसंनिकर्षाश्रयत्वसत्त्वप्रकारकप्रमाविषयत्वयोरभावेनोक्तदोषाभावादितिभावः । कालासंबंधिनएवारोपितत्वांगीकारेण "यद्यथाभूतंप्रतीयतेतत्तथास"दितितत्वलक्षणांतरंदूषयताखंडनकारेण "भावी"त्यादिनाऽऽरोप्यमाणरक्तरूपस्ययत्कालांतरेसत्वमंगीकृतं तदपिनिरस्तमित्याशयेनातिदिशति ॥ एतेनेति ॥ भावीयोयंपाकस्तेजस्संयोगलक्षण्यः

तेन रागोरक्तिमायस्य स भाविपाकरागोघटः श्यामतादशायां रक्तपित्तिना तन्नामकनयनपाटवापनयनपटुनादोषविशेषेण रक्ततयोपलभ्यमानःतत्वंस्यात् । यथाभूतंप्रतीयतइत्याद्युक्तेरितिभावः । एतेनेत्युक्तंविशदयति ॥ भाविनइति ॥ भाविनोरक्तरूपस्य प्रमेयत्वेपि पूर्वस्य श्यामतादशायांप्रतीतस्य । तथाभावाभावात् सत्यत्वाभावात् । नहिकालांतरभाविन्याःसत्तायाइदानीमुपयोगोस्ति । अतिप्रसंगादितिभावः । किमत्र रागस्यतत्वताऽऽपाद्यतउताधिष्ठानस्यकुंभस्य । आद्येपि किमारोपितस्योत भाविनः । नाद्यः । तस्यात्यंतासत्त्वेनतत्वताऽयोगात् । द्वितीयस्त्वभ्युपगमवादपराहतः । तृती

भाविपाकरागःकुंभःश्यामतादशायां रक्तपित्तिनारक्ततयोपलभ्यमानस्तत्वंस्यादित्यपि
परास्तं । भाविनःप्रमेयत्वेपि पूर्व(स्यातथात्वात् ।) स्यतथा(त्वाभावात् ।) भावाभावात् ।
धर्मिणस्त(थाभावा)त्वभावांगीकारादिति । तद्विविधं । स्वतंत्रमस्वतंत्रंचेतीतीतिश
ब्दाध्याहारेणयोज्यं । अन्यथास्वतंत्रमस्वतंत्रंचतत्वंप्रत्येकंद्विविधमिति प्रतीतिःस्यात् ।

योपितथैवेतिभावेनाह ॥ धर्मिणइति ॥ धर्मिणः कुंभस्य । तत्वभावस्तत्वत्वं तस्यांगीकारादित्यर्थः । नयनदोषापगमानंतरंनायंरक्तइतिवन्नायंकुंभइतिकदापिबाधबोधोदयाभावादितिभावः । धर्मिणस्तथाभावादित्यपिपाठोस्तिपुस्तकेक्वचित् । तथाभावात् तथात्वात् । सत्यत्वादितितदर्थः । इतिशब्दस्तत्वलक्षणस्यातिव्याप्तिशंकानिराससमाप्तौ । तत् तत्वं । द्विविधं द्वेविधेस्वतंत्रत्वास्वतंत्रत्वरूपप्रकारद्वयंयस्य तद्विविधं । इतिशब्दानध्याहारेबाधकमुद्बोधयति ॥ अन्यथेति ॥

अन्यथा इतिशब्दानध्याहारेणयथाश्रुतयोजनायां। नचेष्टापत्तिरितिवाच्यं । स्वतंत्रतत्वद्वैविध्यस्यप्रमाणबाधितत्वात् । अस्वतंत्रतत्वस्यस्वतोनेकत्वेपि "द्विधेतर"दितितदवांतरविभागस्यवक्ष्यमाणत्वेनपौनरुक्त्यापत्तेश्च । स्वतंत्रमस्वतंत्रमितिनामोच्चारणेनैवानयोर्लक्षणमपिसूचितमित्याह ॥ स्वरूपेत्यादिना ॥ स्वरूपप्रमितिप्रवृत्तिलक्षणसत्तात्रैविध्येपरानपेक्षं परानधीनंस्वतंत्रमित्यर्थः । प्रवृत्तिस्तत्तत्कार्यानुकूलोव्यापारः । अत्रपरानधीनसत्ताकत्वमेवस्वतंत्रलक्षणं । तद्घटकीभूतसत्ताविवरणंस्वरूपेत्यादिनाकृतं । नतुलक्षणघटकं । येनस्वरूपसत्तायांपरानपेक्षंस्वतंत्रमित्येतावतैवेष्टसिद्धेःशिष्टंव्यर्थंस्यादितिभावः । यत्स्वरूपसत्तादौस्वाधीनं नतुपरापेक्षमितितत्वविवेकटीकायामादिपदस्यलक्षणत्रयसूचकत्वाल्लक्षणत्रयंयथागृह्यते

स्वरूपप्रमितिप्रवृत्तिलक्षणसत्तात्रैविध्येपरानपेक्षंस्वतंत्रं । परापेक्षमस्वतंत्रं ।

तथाऽत्रापिवैभवादनेकलक्षणप्रदर्शनार्थंवा "स्वरूपे"त्याद्युक्तमितिज्ञेयं । परानपेक्षमित्यस्यपरानधीनत्वार्थकत्वकरणेनस्वतंत्रतत्वलक्षणस्यपरापेक्षाशून्येषुपाषाणादिषुनातिव्याप्तिः । एतेनैवचास्वतंत्रलक्षणेपिपरापेक्षारहितेऽभिहितस्थलेनाव्याप्तिरित्यपिबोध्यं । स्वरूपादीनांसत्वव्यवहारस्तु "अन्यत्राभावाच्चनतृणादिव"दितिसमयपादीय "शक्तीस्ताःप्रेरयत्यंजस्तदधीनाश्चसर्वदा । सत्ताप्रधानपुरुषशक्तीनांचप्रतीतयः । प्रवृत्तयश्चताःसर्वानित्यंनित्यात्मनायत"इत्यनुव्याख्यानव्याख्यानसुधायां "केचिन्मन्यंतेवस्तुनःस्वरूपमेवसत्वमिति । अपरेतुप्रमाणयोग्यत्वमिति । अन्येपुनरर्थक्रियाकारित्वमिति । तदिदंत्रयमपि

प्रकृत्यादीनांभगवदधीन"मित्यनेनग्रंथेनस्वरूपादीनांसत्वव्यवहारादत्रापिसंभवतीतिबोध्यं । अस्वतंत्रलक्षणेपरपदस्थाने ईशपदप्रक्षेपेऽतिव्याप्तिरीशे । देशकालादेदेशादिसंबंधित्ववदीशस्यापीशाधीनसत्ताकत्वस्य "स्वतंत्रःस्वेच्छाधीनप्रवृत्ति"रिति तत्वोद्द्योतटीकादिषुतत्रतत्रोक्तत्वात् । अतः परेत्युक्तं । एवंचान्यपदपर्यायपरपदेन यस्मिँल्लक्षणमुपपाद्यतेतदन्यस्यैवग्रहणान्नातिव्याप्तिरितिभावः । इष्यतइत्यंशस्यवैयर्थ्यंपरिहरन्नवतारयति ॥ तदिति ॥ तस्य उक्ततत्वविभागस्य उपपादनं समर्थनं तस्मादित्यर्थः । नन्वंगीक्रियतइत्येतत्समानार्थकेष्यतइत्यस्यकथमुपपादकत्वमित्यतः अपेक्षिताध्याहारेणतंप्रकारं

तदुपपादनायोक्तमिष्यतइति । प्रामाणिकैरितिशेषः । तथाहि । यदितत्वमेवनास्तीतिब्रू
याच्चदाप्रत्यक्षादिविरोधः । (साभ्रांतिरितिचेन्न ।) भ्रांतिःसेतिचेन्न । बाधकाभावात् ।

दर्शयति ॥ प्रामाणिकैरित्यादिना ॥ प्रमाणानिविदंत्यधीयतेवाप्रामाणिकाः । तदधीतेतद्वेदेतिचोक्थादिगणेसंनिवेशात् ठकि "ठस्येक"इतीकेप्रामाणिकेतिभवति । स्वतंत्रमस्वतंत्रंचेतितत्वंद्विविधमितिप्रामाणिकैरिष्यतइत्यनेनसूचितामितरेषामप्रामाणिकतांलेशतःस्वयमाह ॥ यदीति ॥ तत्वमेवनास्ति दूरेतद्विभागइतियदिकश्चिद्वदेदित्यर्थः । प्रत्यक्षादिविरोधः घटाद्यपरोक्षप्रतीतिविरोधः । आदिपदेनानुमानपरिग्रहः । सेति । "शैत्यंहियत्साप्रकृतिर्जलस्ये"त्यादिकेष्विवविधेयापेक्षयास्त्रीलिंगप्रयोगः ॥ बाधकाभावादिति ॥ नेदंरजतमितिवन्नायंघटइत्यादिबाधकाभावादित्यर्थः । नचासंजातबाधभ्रमे

"योयोभ्रमःससबाधसहित"इतिनियमस्य व्यापकीभूतबाधसाहित्याभावेनव्यभिचारइतिवाच्यं । तददतिरिक्तभ्रमस्यैवनियमांतर्गतत्वान्नदोषः । ननु भवद्भिर्यत्रनियमःसंकोच्यतेसएवचघटादिविषयोभ्रमःपरेणांगीक्रियतइतिव्यर्थमुक्तनियमरक्षणमितिचेत् माहिभूदुक्तविधयापरपराकृतिः । बाधयोग्यतावत्त्वस्यैवबाधसाहित्यार्थतयाविवक्षायांतु भवत्येवायंनियमःसमीचीनइत्यनेनैवसासेत्स्यतीतिनदोषः । अभ्युपगतेपिभ्रमत्वे "अशितेपिलशुनेनशांतोव्याधि"रितिवन्नतत्वंतत्वतोऽनंगीकारार्हमित्याह ॥ नचेति ॥ प्रतीतिसामान्यस्यभ्रमत्वमंगीकुर्वता "अधिष्ठानंचसद्दश"मित्याद्युक्तेर्यदधिष्ठानतयोच्यते तदेव

नचनिरधिष्ठानाभ्रांतिरस्ति । नापिनिरवधिकोबाधः ।

नास्त्येवतत्वमित्यस्यार्थस्यप्रमितत्वाप्रमितत्वयोर्व्याघातश्च ।

तत्वमापततीतिभावः । केशोंड्रकादिभ्रमस्तुतेजोधिष्ठानइतिनातिप्रसंगः । प्रकारांतरेणापितदंगीकारयति ॥ नापीति ॥ "रूपांतरमसत्त्वंहिसोवधिर्यत्रजायते । तंविनानेत्थमित्येवनक्वचिद्बाधईक्ष्यते"इत्यादेः अत्रेदंनास्तीतिवा इदंतन्नेतिवा यत्किंचिदवधिकोबाधोद्दष्टः । नतुनेदमितिवा नेत्थमितिवा । तथाच अत्रेतीदमितिचयदवधितयाऽनुवर्तते तदेवतत्वतयाऽऽपतितमितिभावः । तत्वमेवनास्तीतिविप्रतिषिद्धंचैतदितिभावेनाह ॥ नास्त्येवेति ॥ नास्त्येवतत्वमित्यस्यार्थस्यप्रमितत्वे प्रमितिविषयस्यैवतत्वतया पुनश्चतत्वंनास्तीतिव्याहतंस्यात् । यदिचतत्वंनास्तीत्येतदप्रमितं तर्हितत्वमस्तीत्यस्यप्रमितत्वा

ह्याहतिः । परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनांतरीयकत्वादितिभावः । एकमेवतत्वमितिपक्षंप्रतिक्षिपति ॥ यदीति ॥ भेदेति ॥ घटपटादिभेदग्राहकप्रत्यक्षादिविरोधइत्यर्थः । नन्वत्रभेदस्यावास्तवत्वेनतदुपलंभस्यभ्रमत्वसंभवात्तद्विरोधोकिंचित्करइत्यतआह ॥ तदिति ॥ तस्यभेदोपलंभस्यभ्रांतितायांवक्तव्यायांबाधकंवाच्यं । नोक्तंबाधकं । अतोनायंभ्रमरूपइत्यर्थः । ननु "नास्तिनासीन्नभविष्यति भेदोमिथ्याभेदत्वाच्चंद्रभेदवत् नेहनानास्तिकिंचन विभेदजनकेज्ञानेनाशमात्यंतिकंगते । आत्मनोब्रह्मणोभेदमसंतंकःकरिष्यति । सापेक्षत्वात्सावधेश्चतत्वेद्वैतप्रसंगतः । एकाभावादसंदेहान्नरू

यदिचैकमेवतत्वंतदाभेदोपलंभविरोधः । तद्भ्रांतितायांचबाधकंवाच्यं । तच्चान्यत्रनिरस्तं । यदिवासर्वमेवस्वतंत्रंस्यात्तदापारतंत्र्यादिप्रतीतिविरोधः । नित्यसुखादिप्रसंगश्च । यदिवापरतंत्रमेवतत्वंभवेत्तदाऽनवस्थितेरसंभवाच्चनकस्यापिसत्तादिकंस्यात् ।

पंवस्तुनोभिदे"त्यादीनांबाधकानांविद्यमानत्वात्तदेवबाधकजातमत्राप्युच्यतइत्यतआह ॥ तच्चेति ॥ तत् बाधकं अन्यत्र तत्वनिर्णयटीकादौनिरस्तमित्यर्थः । मतांतरमाशंक्यपरिहरति ॥ यदिवेति ॥ सुखदुःखादित्साजिहासावतस्तदुपादानहानयोःशक्तिमत्त्वस्यैवस्वातंत्र्यरूपतया सर्वेषांस्वातंत्र्येनिरंतरंदुःखासंभिन्नसुखानुभवप्रसंगइतिभावः । "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः यदिनामनतस्यवशेसकलंकथमेवतुनित्यसुखंनभवे"दित्यादिभगवत्पादाचार्योक्तेः । तत्वमंगीकरोमिबहुविधं । परंतुतत्परतंत्रमेव । नतुस्वतंत्रमितिस्वविभागविरोधिपक्षांतरंप्रतिक्षिपति ॥ यदिवेति ॥ यदिपरतंत्रमेकमे

वतत्वंभवेत्तदासर्वस्यापिपरशब्दितजीवांतरतंत्रत्वस्यवक्तव्यतया तस्यापिजीवत्वेनजीवांतरमेवतन्नियामकंवाच्यं । तदप्येवंतदप्येवमित्यनवस्थितेः । नचवाच्यंबीजांकुराद्यनवस्थावदस्याअप्यनवसितपरंपरारूपायाअनवस्थायाःसिद्धविषयत्वेननदूषणत्वमिति । पूर्वपूर्वजीवनियामकत्वसिद्ध्यधीनत्वादुत्तरोत्तरजीवनियामकत्वस्य तदसिद्धौतदसिद्धेर्मूलक्षयापत्तेस्तस्यादूषणत्वसंभवात् । यथाहुः "मूलक्षयकरींप्राहुरनवस्थांहिदूषण"मिति । जीवांतरस्यापिजीवत्वसाम्यान्नियामकत्वासंभवाच्चनकस्यापिसत्ताशब्दिताप्रवृत्तिःस्यादित्यर्थः । "अनवस्थितेरसंभवाच्चनेतर"इतिभगवत्स्मरणादितिसूचयितुंसौत्रपदानुक

आगमविरोधश्च । यद्यपिभावाभावतयावाचेतनाचेतनत्वेनवा
नित्यानित्यतयावाऽस्यद्वैविध्यंशक्यतेवक्तुं । तथाप्यस्यवैयर्थ्या

रणं । नचाक्षिपच्छून्यतया स्वतःपृथक्प्रवृत्तिविकलयोरप्यंधपंग्वोरितरेतरसाहित्येनेव स्याज्जागतीप्रवृत्तिरितिवाच्यं । मेलकस्यापिकस्यचिदपेक्षणीयत्वादित्यत्रतात्पर्यात् । दूषणांतरमप्याह ॥ आगमविरोधश्चेति ॥ चःपूर्वहेतुभ्यांसहसमुच्चये । आगमाश्च "आनीदवातंस्वधयातदेकंतस्माद्धान्यन्नपरःकिंचनास नाहंकंचिदुपाश्रितः सर्वस्याधिपतिःसर्वस्येशान"इत्याद्याभगवत्स्वातंत्र्यप्रतिपादकाद्रष्टव्याः । प्रकारांतरेणविभागकर्तव्यतामाशंक्यास्यैवसाफल्यादयमेवविहितइत्याह ॥ यद्यपीत्यादिना ॥ द्वंद्वांतेश्रूयमाणस्तलप्रत्ययउभयत्राप्यन्वेति । अस्य तत्वस्य । अस्य परपरिदर्शितविभागस्य । वैयर्थ्यात्

मोक्षजनकज्ञानाविषयत्वादितिभावः । अयमेव स्वतंत्रमस्वतंत्रंचेत्यादिनाकृतोविभागएव न्याय्यः न्यायादनपेतः । "धर्मपथ्यर्थन्यायादनपेत"इतियत् । तमेवन्यायमुपपादयति ॥ परतंत्रेत्यादिना ॥ परस्तंत्रंप्रधानंयस्यतत्तथा । "तंत्रंप्रधानेसिद्धांतेकुटुंब"इतिविश्वः । "तंत्रंप्रधानेसिद्धांत"इत्यमरः । तंत्रंकुटुंबकृत्येस्यादित्यारभ्य "प्रधानेतंतुवायेचे"तितट्टिप्पणी संगृहीताभिधानंच । आयत्ततया अधीनतया । "अधीनोनिघ्नआयत्त"इत्यमरः । आयत्तत्वंचस्वसत्तादौयथासंभवंज्ञेयं । निःश्रेयसाय निश्चितंश्रेयोनिःश्रेयसं मोक्षः । तस्मै । अचतुरेतिनिपातनादच् । "श्रेयोनिःश्रेयसामृत"मित्यमरः । तत्र

दयमेवविभागोन्याय्यः । परतंत्रप्रमेयंस्वतंत्रप्रमेयायत्ततयाविदितंहिनिःश्रे

यसायभवति । तथाचप्रकरणांतेवक्ष्यति । अन्यथागंगावालुकापरिगणनव

दिदंतत्वसंख्यानमपार्थकंस्यात् । अतःस्वतंत्रास्वतंत्रभेदाद्द्विविधंतत्वमिति

ज्ञापकमाह ॥ तथाचेति ॥ प्रकरणांते तत्वविवेकेनसहैकंप्रकरणमिदमिति "यएतत्परतंत्रंतुसर्वमेवहरेःसदा । वशमित्येव जानातिसंसारान्मुच्यतेहिस"इत्येतत्प्रकरणांतेवक्ष्यतीत्यर्थः । भावाभावतयेत्यादिविभागकथनेतज्ज्ञानस्यमुक्त्यनुपयुक्तत्वाद्गंगागतसिकतागणनावद्व्यर्थमिदंतत्वसंख्यानमापद्येतेत्याह ॥ अन्यथेति ॥ अन्यथा अस्मदीत्याविभागाकरणे । अपगतोऽर्थोयस्मात्तत्तथा । निरर्थकमित्यर्थः । उक्तमर्थमुपसंहरति ॥ अतइति ॥ एतदोनित्यनिवा ऽशिवा तसिलि अतइति

भवति । एतस्माद्धेतोरित्यर्थः । इदंशब्दस्यवोक्तादेशेप्रत्ययेतसिलिचेदंरूपं । इदंशब्दपरामृश्यंदर्शयतीतिसुधापरिमले
"यद्वा इदमइशित्यतोयोगविभागादिदमोऽन्यशिवेदंशब्दस्याप्यतइतिरूप"मित्युक्तेः । इतिशब्दःसामान्यविभागपरिस
माप्तौ । नन्वत्रस्वतंत्रतत्वस्यादावुद्देशःकुतः । उद्दिष्टस्यचलक्षणंवक्तव्यं । मूलेतत्कुतोनोक्तं । स्वतंत्रोभगवान्विष्णुरितिशृं
गग्राहिकयाऽऽदौनिर्देशश्चकिंनिमित्तइतिशंकाःक्रमेणपरिहरन्मूलमवतारयति ॥ स्वतंत्रतत्वस्येत्यादिना ॥ प्राधान्यात्
अभ्यर्हितत्वात् । आदौ स्वतंत्रमस्वतंत्रमित्यादिभागे । उद्देशेनैव नाम्नासंकीर्तनेनैव । स्वरूपप्रमितीत्यादिनाऽस्मा
भिर्दर्शितप्रनाड्येतिभावः । इति इतिकृत्वा । अतएव प्राधान्यादेव । निर्दिशति शृंगग्राहिकयादर्शयतिचेत्यर्थः । ननु

स्वतंत्रतत्वस्यप्राधान्यात्तदेवादावुद्दिष्टं । उद्देशेनैवलक्षणंचलब्धमिति
(लब्धं) । अत(तत)एवादौतन्निर्दिशति ॥ स्वतंत्रोभगवान्विष्णुः ॥

पूर्वमुद्देश्यप्राथम्यानुसारेणतत्वंद्विविधमित्यनुक्त्वा "स्वतंत्रमस्वतंत्रंचे"तिप्रथमतस्तत्कीर्तनस्यमंगलसूचकत्वाभिधानात् इ
दानीं "प्राधान्यात्तदेवादावुद्दिष्ट"मितिकथने कथंनविरोधइतिचेदुच्यते । पूर्वं अनिश्चितभाष्यकृदाप्तभावस्य अतएवमंग
लानुमापकपरमास्तिकत्वहेतोःस्वरूपासिद्धिंमन्वानस्य प्रतिवादिनः मंगलानुष्ठाननिश्चयायप्रत्यक्षतोपिमंगलश्रुतिरियंश्रूयतइ
तिवक्तुंतथाऽभिहितं । इदानीं अवगततदाप्तभावस्योक्तहेतुनैवमंगलसिद्धेःस्वतंत्रत्वस्यप्रथमतउद्देशेनिमित्तपरिचोदनायां
प्राधान्यरूपोहेतुरभिहितइतिनवैयर्थ्याख्यविरोधइति । स्वतंत्रोविष्णुरित्येतन्मात्रोक्तावभिलषितासिद्धेः किंतत्वविवेकइव

पूजार्थकभगवच्छब्दग्रहणेनेत्यतआह ॥ अत्रेति ॥ अस्मिन्प्रकरणइत्यर्थः । तत्वविवेके "निर्दोषाशेषसद्गुण"इतिस्वातंत्र्योपपादकस्यान्यस्यविद्यमानत्वात्तस्यपूजार्थकत्वेप्यत्रतदभावात्स्वातंत्र्यंविष्णोरेवकुतइत्यतउक्तं भगवानिति ॥ भगवांश्चसउच्यते यः "ऐश्वर्यस्यसमग्रस्यवीर्यस्ययशसःश्रियः । ज्ञानवैराग्ययोश्चैवषण्णांभगइतीरणे"त्युदीरितैश्वर्यादिषड्गुणः । ततश्च विष्णुःस्वतंत्रः । भगवत्त्वात् । व्यतिरेकेणयज्ञदत्तवदितिप्रकारेणभगवत्त्वंस्वातंत्र्यस्योपपादकं साधकंभवतीतिभावः । प्राधान्यात्स्वतंत्रतत्वस्यविष्णोरादौशृंगग्राहिकयानिर्देशेनैवार्थात्सूचितंतदितरस्यास्वातंत्र्यंकंठतआह ॥ अन्यदिति ॥ अत्र भगवानितिविष्णोरितिटीका विष्णुशब्दस्यरूढत्वंभगवच्छब्दस्ययौगिकत्वमभ्युपेत्यप्रवृत्ता । यदातुवैपरीत्यंविवक्षितं तदावि

**अत्रभगवानितिविष्णोःस्वातंत्र्योपपादकं । अन्यदस्वतंत्रमितिशेषः ।**

ष्णुरितिभगवतःस्वातंत्र्योपपादकमितिटीकाविन्यासोबोध्यः । ततश्च "भगवान्भगहानंदी"त्युक्तदिशा भगवान्हरिः स्वतंत्रः । विष्णुत्वात् । व्यतिरेकेणचैत्रवदितिप्रयोगोबोध्यः । विष्णुत्वात् सर्वव्यापित्वात् । विष्लृव्याप्तावितिधातोः "विषेःकिच्चे"तिसूत्रेण "स्थोणु"रितिसूत्रादनुवृत्तणुप्रत्यये तस्यकित्त्वेनगुणाभावे विष्णुरितिरूपं ॥ १ ॥ वियंत्यनेनमोक्षंप्रतिजनाइति वाविष्णुः । गत्यर्थाद्वीधातोःकरणेक्स्नुप्रत्यये पृषोदरादित्वाद्धात्वीकारह्रस्वत्वेकित्त्वाद्गुणाभावे "आदेशप्रत्यययो"रिति सस्यषत्वे "रषाभ्यांनोणःसमानपद"इतिनस्यणत्वेरूपं ॥ २ ॥ सर्वप्रवेशित्वाद्वाविष्णुः । विशप्रवेशनइत्यस्मात् "उणाद

योबहुल"मितिक्स्नुप्रत्ययेपृषोदरादिभावेनशस्यषत्वे णत्वेच रूपं ॥ ३ ॥ कांत्यर्थाद्वीधातोर्वाक्स्नुः । शिष्टंपूर्ववत् । कांति श्चनसर्वसाधारणी । किंत्वभ्यधिकेतिद्रष्टव्यं ॥ ४ ॥ अधिभूतादिसंबंधिजन्मादिविषयेच्छावत्त्वाद्वा । वशकांतौकांतिरिच्छे त्युक्तेरिच्छार्थाद्वशधातोर्बाहुलकेनुप्रत्यये निर्वचनत्वादुपधाकारस्येकारे शस्यषत्वेरूपं ॥ ५ ॥ त्रिविक्रमरूपेणचरणक्रमणा द्वाविष्णुः । गत्यर्थाद्वयतेःकर्तरिक्स्नुः । पूर्ववदुर्वरितं ॥ ६ ॥ तदुक्तंश्रीगीताभाष्ये "विष्णुः । सर्वव्यापित्वप्रवेशित्वादेः । विष्लृव्याप्तौ, विशप्रवेशनइतिचपठंति । गतिश्चसर्वभूतानांप्रजानांचापिभारत । व्याप्तौमेरोदसीपार्थकांतिश्चाभ्यधिकामम । अधिभूतनिविष्टश्चतदिच्छुश्चास्मिभारत । क्रमणाच्चाप्यहंपार्थविष्णुरित्यभिसंज्ञितइतिमोक्षधर्मे"इति । आगमेनहिविष्णुत्व

अथवा द्वैतत्वेइत्युक्तेस्वतंत्रामिवपरतंत्रमेकाव्यक्तिरेवप्रसज्येत ।

मितिज्ञानपादीयसुधायां "विष्णुत्वंतु समस्तगुणपरिपूर्णत्वनिर्दोषत्वजगज्जन्मादिकारणत्वलक्षणंनप्रत्यक्षमत"इत्याद्युक्ते र्भवतिस्वतंत्रत्वोपपादकंविष्णुत्वमितिमंतव्यं । एवमैतरेयभाष्येपि "सर्ववेष्टयितृत्वाच्च विशिष्टबलतस्तथा । विष्णुरित्यभि धामह्यं सानयुक्तादिवौकसा"मित्यादिनाविष्णुपदार्थउक्तोऽनुसंधेयः । विष्णुर्नारायणइत्यमरव्याख्याने "वेष्टिसर्वमिति विष्णुः । विष्लृव्याप्तौ । विषेःकिच्चेतिनु"रित्येवमेवोक्तं । विष्णुत्वोपपादकत्वंचपूर्वोदीरितरीत्याज्ञेयं ॥ उक्तपक्षे "अन्य" दित्यादिशेषकल्पनाकार्येत्यस्वरसादाह ॥ अथवेति ॥ इत्युक्ते एवंविन्यासकरणे ॥ प्रसज्येतेति ॥ यत्रव्यक्त्यैक्यंतत्रैव

प्रायेणद्वित्वप्रयोगादितिभावः । किमतोयद्येवमित्यतआह ॥ तथाचेति ॥ प्रमाणविरोधइति ॥ अस्वतंत्रानेकत्वस्यप्रत्यक्षादिसिद्धत्वेनतद्विरोधइत्यर्थः ॥ वक्ष्यमाणविभागविरोधश्चेति ॥ भावाभावौद्विधेतरदितिवक्ष्यमाणविरोधश्चेत्यर्थः ॥ अतइति ॥ यद्यपि यत्रप्रकारद्वित्वमुच्यतेतत्रप्रकारिद्वित्वंनसेत्स्यति । तथापि प्रकारद्वित्वंस्वाविनाभाविप्रकारिद्वित्वमाक्षिपत्येवेति द्वेइतिप्रकारिद्वित्वमनुक्त्वा प्रकार्यवांतरभेदसूचनाय विधांतेनप्रकारद्वित्वमभिहितमित्यर्थः ॥ ततश्चेति ॥ द्विविधमित्युक्तौसत्यामित्यर्थः ॥ अनेकंस्यादिति ॥ परतंत्रवदितिभावः । इदमुक्तं स्वतंत्रोभगवानित्युक्तमित्यर्थः । नन्वे

तथाचप्रमाणविरोधोवक्ष्यमाणविभागविरोधश्च । अतोद्विविध
मित्युक्तं । ततश्चस्वतंत्रमप्यनेकं(कविधं)स्यादित्यतइदमुक्तं ।

वंसतिकथंनव्याहतिः । द्विविधमितिस्वतंत्रतत्वस्यानेकत्वमुक्त्वा "स्वतंत्रोभगवान्विष्णु"रित्येकत्वोक्तेरितिचेन्न । अयमभिप्रायोमूलकारस्य । नवयंप्रकारिणोरवांतरभेदःप्रकारद्वैविध्योक्त्यावचनवृत्त्याप्रतिपाद्यतइतिब्रूमः । येनोक्ताव्याहतिःस्यात् । नापिप्रकारद्वैविध्यंप्रकार्यवांतरस्यभेदस्यव्याप्यंयेनैतदुक्त्याव्यापकस्यतस्यलाभेनोक्तोदोषःस्यात् । किंनामाश्रययोरैक्यप्रापकप्रकारिद्वित्वमनुक्त्वा "द्विविध"मितिप्रकारद्वित्वोक्तिःप्रकार्यवांतरभेदस्यसूचिकैव । साप्यपवादाभावे । यथा "भावाभावौद्विधेतर"दित्यादौ । यत्रपुनरपवादस्तत्र यस्मिन्प्रकारिण्यवांतरभेदस्तत्रैवपर्यवस्यति । यथा "दुःखस्पृष्टंतद

स्पृष्टमितिद्वैधैवचेतन"मित्यादौ । एवंच प्रकृतेऽपवादसद्भावेनतथोक्तिरितिकथंव्याहतिः । एवंतार्तीयचरणस्यविधांतसूच्चितप्रकार्यवांतरभेदनिरासकत्वेनस्वतंत्रतत्वस्यश्रृंगग्राहिकयानिर्देशरूपत्वाभावेननतन्निर्देशानंतरमस्वतंत्रंकिमित्याकांक्षायांनिवर्तकत्वेनावश्यंवक्तव्यस्यान्यदस्वतंत्रमित्यस्यानुक्तिप्रयुक्तोदोषइतिभावः । प्रकारांतरेणैतत्वादप्रवृत्तिंदर्शयति ॥ अथवेति ॥ सांख्यादयइत्यत्रादिपदेन शैवसौरादीनांग्रहः । प्रधानं जडप्रकृतिः । आदिना हरसिहिरादयोग्राह्याः । इदं स्वतंत्रमित्यादि । तन्निरासप्रकारस्तु "रचनानुपपत्तेश्चनानुमान"मितिसूत्रतद्भाष्यादितोज्ञेयः । सूचितमिति ॥ उक्तप्रनाड्ये

अथवा स्वतंत्रास्वतंत्रभेदेनतत्वद्वैविध्यमंगीकुर्वाणाअपिसांख्यादयःप्रधानादिकंस्वतंत्रतत्वमातिष्ठंते । तन्निरासायेदमुदितमिति । द्विविधमित्युक्त्यापरतंत्रतत्वमवांतरभेदवदितिसूचितं । तत्कथं(मिति) तत्राह ॥ भावाभावौद्विधेतरत् ॥ इतरत् स्वतंत्रात् । अस्वतंत्रतत्वंद्विधा । कथं । भावोऽभावश्चेति ।

तिभावः । कथं किंप्रकारोपेतमित्यर्थः । अनतिप्रसक्तयेइतरदित्यस्यावधिमभिधत्ते ॥ स्वतंत्रादिति ॥ अनन्वयशंकांनिराकर्तुमितिशब्दाध्याहारेणमूलंयोजयति ॥ अस्वतंत्रेत्यादिना ॥ नन्वजाद्यंततयाऽभावभावावितिवक्तुंशक्यमितिचेन्न । ततोपिपराल्पाजादिशास्त्रेणभावाभावावित्येवनिर्देशस्यौचित्यात् । ननु "समुद्राभ्राद्घः लक्षणहेत्वोःक्रियायाः"इत्यादौव्यभिचारात्तदनित्यतायास्तांत्रिकैस्तत्रतत्रोक्तेःपुनःप्रत्यावर्ततआशंकेतिचेत्तर्हि "अभ्यर्हित"मितिवार्तिकेनभावस्याभावज्ञानजन

कज्ञानविषयत्वलक्षणप्राधान्यापरपर्यायशब्दवाच्याभ्यर्हितत्वेनपूर्वप्रयोगार्हतेत्याह ॥ अभावेत्यादिना ॥ नच "श्वयुव मघोनामतद्धित" इतिनिर्देशादिदमप्यनित्यमितिपुनरनवधानंमानसस्यमाचभूत् । सैवशंकापिशाचीमंथरंप्रवर्त्स्यतइतिवाच्यं । यथाऽल्पाच्तरशास्त्रस्यबहुषुस्थलेषुव्यभिचारस्तथानाभ्यर्हितशास्त्रंव्यभिचचार । व्यभिचचारचक्कचिदेवेतिसापवादमेदिनी मपहायाविहायतदितरत्सामान्यशास्त्रंमान्यंस्वार्थसाधनइतितद्भावबोधनसंभवात् । तथाच लोकालोकयोः "सर्वानानय नैकंमैत्रं नहिंस्यात्सर्वाभूतानि अग्नीषोमीयंपशुमालभेते" त्यादौयथैकस्यमैत्रस्यापवादादानयनाभावेपितदितरसर्वानयनं, यथावाऽग्नीषोमीयपशोःशास्त्रविशेषाद्धिंसाकर्मत्वेपितदितरहिंसाकरणमर्थःसामान्यसमयस्येतिदृष्टं तथात्रेतिनानुपपत्तिः ।

## अभावप्रतीतिर्भावप्रतीत्यधीना

यथोक्तमनुव्याख्याने "उत्सर्गतोपियत्प्राप्तमपवादविवर्जितं । व्यभिचार्यपवादेनमानमेवभविष्यती"ति । इदमप्यनित्य मितिशब्देंदुशेखरवैखर्यपिप्रकरणानित्यत्वविज्ञप्त्यैप्रवृत्ता । नतुक्कचिदपिनैतच्छास्त्रंप्रवर्ततइतिभावमावेदयितुमितिनतद्वि रोधः । अन्यथा वासुदेवार्जुनाभ्यामित्यादिसूत्रकृदाज्ञावज्ञानप्रसंगात् । अतोऽभ्यर्हितत्वंमनसिकृत्वा यत् "प्राधान्या" दित्यभ्यधात् तत्साध्वितिदिक् । अभावत्वेनाभावप्रतीतिरत्रविवक्षिता । तेनप्रमेयत्वेनाभावप्रतीतेःप्रतियोगिभावप्रतीत्य नधीनत्वेपिनदोषः । साचप्रतीतिःसाक्षात्काररूपा । तेनाभावपदाज्जायमानेऽभावबोधेतदपेक्षाभावेपिननियमस्योक्तस्या तिक्रमः । भावस्याप्यभावविलक्षणत्वेनप्रतीतिरभावरूपप्रतियोगिसापेक्षेत्यभावस्यापिप्राधान्यात्सएवादौकिंनोद्दिश्यतइत्य

तआह ॥ **नियमेनेति** ॥ तथाच यथाऽभावप्रतीतेर्नियमेनभावप्रतीत्यनधीनत्वं तथाभावप्रतीतेर्नियमेनाभावप्रतीत्यनधीनत्वाभावान्नतस्यादावुद्देशइतिभावः । ननु प्रागभावध्वंसप्रतीतेःप्रतियोगिप्रतीत्यधीनत्वेप्यत्यंताभावप्रतीतेःकथंप्रतियोगिप्रतीत्यधीनत्वं । तत्प्रतियोगिनोत्यंतासत्त्वादितिचेन्न । तत्रापि अप्रसक्तस्यप्रतिषेधायोगेन प्रसक्तिरूपायाभ्रांतेश्चत्वयाये अधिष्ठानप्रधानेऽच्येते तद्रूपभावप्रतीत्यधीनत्वादितिब्रूमः । भावाभावयोःक्रमेणप्रतीतिघटितेलक्षणेआह ॥ **प्रथमप्रतीताविल्यादिना** ॥ मूलउद्देशेनैवलक्षणस्यसूचितत्वान्नतदनुक्तिर्दोषइतिभावः । अभावेभावेचाद्वितीयप्रतीतावास्तिनास्तीतिविषयत्वस्यसत्त्वात्परस्परमतिव्याप्तिवारणायप्रथमेतिविशेषणं । नचशुक्तिरूप्यस्यापिप्रथममस्तीत्युपलभ्यमानत्वेनतत्रातिव्याप्तिः । नचतत्रास्तित्वमेवनप्रतीयतइतिवाच्यं । तथात्वेप्रवृत्त्यभावापत्तेरिति । प्रतीतेःप्रमात्वविवक्षणाद्वो "पलभ्यत" इत्युक्तविषयत्वस्यज्ञानासाधारणकारणसंनिकर्षाश्रयत्वरूपस्यविवक्षणाद्वा नोक्तदोषइत्यत्रतात्पर्यात् । ननु किंप्रतीतौप्रथमंयोस्तीत्युपलभ्यतइतिप्रथमत्वंकालविशेषणं किंवा प्रथमायाप्रतीतिरितिप्रतीतिविशेषणं । नाद्यः । बुद्धेर्विरम्यव्यापाराभावात् । द्वितीयेपि किमिहजन्मनिस्वविषयिकायाप्रतीतिःसाविवक्षिता किंवैकसामग्रीजन्यासुप्रथमायाप्रतीतिःसावा । अथ वायदायदास्वयंजायतेतदातदास्वविषयकंज्ञानद्वयमस्ति । आपातजंविमर्शजमिति । तत्रापातजायासंवित्सावा । नाद्यः ।

**नियमेनेतिप्राधान्यात्प्रथमंभावस्योद्देशः । प्रथमप्रतीतावस्तीत्युप**
**लभ्यतेयःसभावः । यश्चप्रथमोपलब्धौनास्तीतिप्रतीयतेसोभावः ।**

गिरिवर्तिनोगजाभावस्यज्ञानात्पूर्वमेवजातायां यत्प्रमेयंतदस्तीतिसामान्याकारेणप्रमेयमात्रविषयायां वन्यगजाभावस्यप्रथमप्रतीतेस्तत्रभावाभावलक्षणयोरतिव्याप्त्यव्याप्त्यापत्तेः । नद्वितीयः । एकसामग्र्याअनेकज्ञानजनकत्वायोगात् । सामग्रीभेदाभावेकार्यभेदस्याकस्मिकत्वप्रसंगात् । तृतीयेप्यस्तिनास्तिप्रतीतीकेइमे । किमस्तिनास्तीतिव्यवहारोत्पादिके किंवाऽस्तिनास्तिपदार्थविषयिके यद्वाऽस्तित्वनास्तित्वप्रकारिके । नाद्यः । अव्याप्तेः । ज्ञानस्यव्यवहारजनकत्वनियमाभावेनास्तीत्यादिप्रतीतिविषयत्वाभावात् । उत्पन्नस्यापिज्ञानस्यव्यवजिहीर्षाभावेव्यवहारजनकत्वाभावसंभवात् । नद्वितीयः । भावाभावलक्षणयोरतिव्याप्त्यसंभवयोरापातात् । भावाभावयोरपिनास्त्यस्तिपदार्थत्वात् । अन्यथापश्चादपिकथंतयोस्तेस्यातां ।

कुतएतत् । स्वरूपेणहिभावाभावौविधिनिषेधात्मानौ । रूपांतरेणतुनिषेधविधिरूपौ । तत्रापातजायांसंविदिस्वरूपमेवभासते । द्वितीयादिप्रतीतौरूपांतरं ।

तृतीयेपि केइमेअस्तित्वनास्तित्वे । किंभावत्वाभावत्वे किंवासत्त्वनिषेधत्वे । आद्य आत्माश्रयः । द्वितीये सत्त्वंस्वरूपसत्त्वमेववक्तव्यं । अनुगतसत्तायाःसिद्धांतेऽनंगीकारात् । ततश्चस्वरूपसत्त्वनिषेधत्वयोरभावेभावेचविद्यमानत्वात्तत्स्वरूपप्रतीतौप्रतीयमानत्वात्परस्परमतिव्याप्तिःस्यात् । स्वरूपप्रतीतावप्रतीयमानत्वेऽव्याप्तिःस्यात् । नच उभयत्रसत्त्वनिषेधत्वेविद्येते, प्रतीयेतेच । परंतुभावेस्वरूपसत्त्वमेवप्रथमतःप्रतीयते । निषेधत्वंतुपश्चात् । एवमभावेपिनिषेधत्वमेवप्रथमतःप्रतीयते नसत्त्वमितिवाच्यं । अत्रनियामकाभावादित्याशयेनशंकते ॥ कुतएतदिति ॥ परिहरति ॥ स्वरूपेणहीति ॥ धर्मितयेत्यर्थः ।

रूपांतरेण अभावधर्मतयेत्यर्थः । कथमनेनोक्तशंकापरिहारइतिचेत् इत्थं । प्रथमत्वंप्रतीतौविशेषणं । तत्रयदायदास्वयं ज्ञायतेतदातदास्वविषयकंज्ञानद्वयमस्ति । आपातजंविमर्शजंचेति । आपातजप्रतीतिरेवेहोक्तप्रथमत्वविशेषितप्रतीतिशब्द वाच्या । नचकेइमेइतितत्पक्षविकल्पदोषः । अस्तीत्याकारिकाप्रतीतिरस्तीतिप्रतीतिरितिवदामः । नचात्रास्तीत्याकारकत्वं भावत्वघटितं । येनात्माश्रयःस्यात् । किंत्वखंडस्यैवज्ञानधर्मस्यतस्योररीकरणात् । नचात्रप्रमाणाभावः । भ्रमप्रमासाधा रण्येनास्तिरजतमितिज्ञानानंतरं ममात्ररजतमस्तीतिज्ञानंजातमित्यबाधितानुभवस्यतत्रमानत्वात् । उक्तंचतत्वोद्द्योतटीकायां "रजतज्ञानस्यशुक्तिविषयकत्वंसंविद्विरुद्धमितिचेन्न । रजतज्ञानस्येतिकोर्थः । यदिरजतविषयस्येति तदाऽसिद्धिः । यदा रजतमितिज्ञानस्येति तदापरस्यैवसंविद्विरोधः । यदिदंरजतमित्यमनिषं साशुक्तिकैवेत्यबाधितप्रतीतेः । यदाकारंयद्विज्ञा नमितितुप्रमितिनिष्ठेयंव्यवस्थे"ति । उक्तंचतत्रैवोत्तरत्र "नहितदाकारत्वंतद्विषयत्वमितिपर्यायावेतौ । किंनामसामान्य विशेषवचना"विति । उक्तंचतत्वनिर्णयटीकायां "यथाहिसत्यरजतेइदंरजतमित्यभिज्ञाकारमेवज्ञानमुत्पद्यते तथाभ्रांत रजतेपि इदंरजतमित्यभिज्ञाकारमेवज्ञानमुत्पद्यते । तत्केनप्रमाणेनतस्यान्यत्रसत्त्वंव्यवस्थाप्यत"इति । एवंचाविमर्शजा स्तीत्याकारकज्ञानविषयत्वंभावस्यलक्षणं । नास्तीत्याकारकापातजज्ञानविषयत्वमभावस्यलक्षणमित्युक्तंभवति । यद्वा आपा तजप्रतीतावस्तीत्युपलभ्यतेयःसभावइत्यादौ केइमेअस्तिनास्तीतिप्रतीतीइत्यादिनाविकल्पितेषुपक्षेषु अस्तित्वनास्तित्वप्रका रिकेइतितृतीयकल्पंस्वीकुर्मः । नचतत्रास्तित्वनास्तित्वेदुरुपपादे । अपरप्रतिक्षेपत्वपरप्रतिक्षेपत्वयोरेवविधित्वापरपर्यायस्व

रूपसत्त्वनिषेधत्वपदार्थत्वात् । एवंचापाततोपरप्रतिक्षेपरूपतयाप्रतीयमानत्वंभावस्यलक्षणं । आपाततःपरप्रतिक्षेपरूपतयाप्रतीयमानत्वमभावस्यलक्षणमित्युक्तंभवति । नन्वेवंचेदुपाधिखंडनमंदारमंजर्यामेतत्सर्वंवैतंडिकमतमाशंक्यकथमत्रटीकोक्तादन्यथोक्तमितिचेन्न । भावानवबोधात् । अयंभावः । द्विविधंहिभावाभावयोर्लक्षणं । प्रमेयरूपंप्रमाणरूपंचेति । यथोक्तंयुक्तिपादीय "विशेष्यतैवधर्मित्वंप्रथमप्रतिपत्तिषु । निषेधविधिरूपत्वंभावाभावत्वमत्रही"त्यनुव्याख्यानसुधायां "अयमर्थः । किंभावाभावनियमनिबंधनंप्रमेयरूपमन्विष्यते प्रमाणंवा । आद्यस्योत्तरार्धमुत्तरं । यद्यपिभावात्मकाघटादयः, प्रागभावादयश्च । तथाप्यत्रपदार्थसार्थेयःपिंडोविधिधर्मिकोघटादिःसभावः । यस्तुनिषेधधर्मिकःप्रागभावादिःसोभावइतिव्यवस्थोपपद्यते । अभेदेपिधर्मधर्मिभावोविशेषशक्त्यासंगच्छतइत्युक्तमेव । द्वितीयस्योत्तरं प्रथमप्रतिपत्तिष्विति । प्रथमंयोविधितया परप्रतिक्षेपरूपतांविना प्रतीयते सघटादिर्भावः । यस्तुनिषेधतया परप्रतिक्षेपेण प्रतीयते प्रागभावादिः सोभावइत्युत्तरार्धेनैकवाक्यतयायोज्यं । घटोहिप्रथमंविधित्वेनधर्मिरूपेणप्रतीतोऽनंतरंपटोनभवतीतिपटनिषेधात्मतयाप्रतीयते । प्रागभावादिरपिप्रथमंनिषेधधर्मिस्वरूपेणावगतोऽनंतरंप्रमेयइतिविधितयाप्रतीयतइतिसकलप्रतिपत्तृप्रसिद्धमितिबहुवचनहिशब्दाभ्यांद्योतयती"ति । व्याख्यातानिचैतानिवाक्यान्युक्तलक्षणोपपादनमुखेनकृतशंकानिवर्तकतयाशेषवाक्यार्थचंद्रिकादिषु । एवंचमंदारमंजर्यां वैतंडिकशंकाविषयस्यप्रमाणोपहितलक्षणस्यपराप्रतिक्षेपत्वादिरूपविधित्वापरपर्यायास्तित्वादिघटिततयातज्ज्ञानाधीनज्ञानत्वेनप्रमेयलक्षणनिरूपणेनैवैतदपिसमाहितप्रायमित्याशयेन पराप्रतिक्षेपत्वतत्प्रतिक्षेपत्व

रूपेभावत्वाभावत्वेउच्येते । अभावत्वावच्छिन्नाधारतानिरूप्याधेयत्वाश्रयान्यत्वप्रतियोगित्वंभावत्वमित्यादिनापरिष्कृते । अतोनोक्तविरोधइति । ननूक्तरूपेअपिविधिनिषेधत्वेप्रत्येकंभावे, ऽभावेचविद्येतेइतिसिद्धांतः । ततश्चतेअपिस्वरूपप्रतीतौ यदिप्रतीयेतेतदोक्तरूपविधित्वस्यभावइवाभावेपिप्रत्येतव्यत्वात् उक्तरूपनिषेधत्वस्याप्यभावइवभावेपिप्रत्येतव्यत्वादति व्याप्तिः । यदिचस्वरूपप्रतीतौनप्रतीयेते तदात्वव्याप्तिः । भावएवोक्तरूपंविधित्वमेवप्रथमंप्रतीयते अभावेचोक्तरूपंनिषेधत्वमेवप्रथमंप्रतीयतइत्यत्रनियामकाभावादित्यतः भावाभावयोरभावभावधर्मवत्तयाप्रतिक्षेपाप्रतिक्षेपात्मकत्वेपि धर्मिरूपेणाप्रतिक्षेपप्रतिक्षेपात्मकत्वादापातजायांसंविदिभावेघटादावप्रतिक्षेपधर्मिभानसामग्र्याअभावेचप्रागभावादौप्रतिक्षेपरूप

## कार्यगम्यत्वात्सामग्रीभेदस्य ।

धर्मिभानसामग्र्याश्चसद्भावेपि तदाप्रतिक्षेपाप्रतिक्षेपरूपधर्मभानसामग्रीविरहेणोक्तरूपविधिनिषेधयोरेवभाननियमोपपत्तेर्नाव्याप्तिरित्याशयवानापातजायांसंविदिरूपांतरभानसामग्रीविरहएवद्वितीयादिप्रतीतौतत्समावेशश्चकुतइत्यतःकार्यमेवतत्र प्रमाणमित्यभिप्रेत्यभावविषयमभावविषयंचप्रतीतिद्वयंक्रमेणोदाहरन्कार्यमेवदर्शयति ॥ कार्यगम्यत्वादित्यादिना अस्ति घटाभावइतीत्यंतेन ॥ नच भावलक्षणस्य घटाभावोस्तीतिवाक्यात्प्रथमतोस्तीत्युपलभ्यमानेभावेऽतिव्याप्तिरितिवाच्यं । तत्रापिघटाभावइत्यवांतरवाक्यार्थभूतप्रतिषेधाकारप्रतीत्युत्तरकालमेवतदस्तित्वप्रतीतेः । अतएवघटाभावोनास्तीतिवाक्या

त्प्रथममेवघटस्यनास्तित्वाकारेणप्रतीतेरभावलक्षणस्यतत्रातिव्याप्तिरितिपरास्तं । नन्वेवमप्यभावलक्षणस्यभावेऽतिव्याप्तिः । तथाहि । भेदोहिधर्मिस्वरूपमेव । सचधर्मिग्रहेणगृह्यतएव । यथोक्तमनुव्याख्याने "स्वरूपंवस्तुनोभेदोयन्नतस्यग्रहेग्रह" इति । नच प्रथमप्रतीतौसप्रतियोगिकप्रतिषेधाकारेणप्रतीयमानत्वंविवक्षितं । तथाच घटप्रतीतौस्वरूपाकारेणभेदस्यप्रतीतावप्युक्तरूपेणाप्रतीतेर्नातिव्याप्तिरितिवाच्यं । प्रथममेवसर्वविलक्षणत्वेनवस्तुप्रतीतेरंगीकृतत्वात् । प्रायःसर्वतोविलक्षणंहिपदार्थस्वरूपंदृश्यतइत्यन्यत्रोक्तेः । तथाचकथंनातिव्याप्तिरितिचेत् उच्यते । विशेषतःप्रतिषेधाकारत्वेनप्रतीयमानताया एवाभावलक्षणत्वेनविवक्षितत्वात् । तथाचस्वरूपेणभेदप्रतीतावपिविशेषरूपेणभेदप्रतीत्यभावान्नातिव्याप्तिः । अतएवानं

तथाचप्रतीतिः । अस्त्यत्रघटःसनशुक्लइति । एवंनास्त्यत्रघटोस्तिघटाभावइति । ननुस्वतंत्र

तत्वंभावोऽभावोऽन्यद्वा । नाद्यद्वितीयौ । भावाभावयोःपरतंत्र(प्र)भेदत्वात् । नतृतीयः ।

तरप्रतीतिरिहनशुक्लइति । सुधायांच "पटोनभवती"तिविशेषाकारेणैवाभिहिता । उक्तंचैतदनुव्याख्याने "कोविरोधःस्वरूपेणप्रतीतोभेदएवतु । अस्यामुष्मादितिपुनर्विशेषेणैवगृह्यत" इति । एतेन स्वरूपभेदस्यप्रतीतिभेदेनियामकत्वात्प्रतीत्युपाधिकस्वरूपभेदादेवप्रतीतिभेदइतिकथंनेतरेतराश्रयइतिनिरस्तं । उदाहृतसुधारीत्याप्रतीत्यनुपाधिकभावस्वरूपस्यवक्तुंशक्यत्वादित्यलंप्रपंचेन । कार्यगम्यत्वादित्युक्तं । किंतत्कार्यमित्यतआह ॥ तथाचप्रतीतिरिति ॥ भावाभावौद्विधेतरदितिविभागोऽनुपपन्नः । स्वतंत्रतत्वस्यैतदुभयाननुप्रवेशादितिशंकते ॥ नन्विति ॥ नाद्यद्वितीयौ युज्येतेइतिशेषः । तत्रहेतुमाह ॥ भावाभावयोरिति ॥

परतंत्रभेदत्वात् परतंत्रप्रभेदत्वादित्यर्थः ॥व्याघातादिति॥ वस्तुषुभावाभावान्यतरत्वस्यैवसत्त्वात्तदुभयभिन्नस्यतस्यांगीकारे व्याहतिःस्यादित्यर्थः । ननुभावाभावान्यत्वस्यशशविषाणादौसत्त्वात्कथंव्याहतिरितिचेन्मैवं । तदुभयभिन्नस्यवस्तुनोऽभावादित्यनेनोक्तोत्तरत्वात् । अभ्युपेत्येदमुदितं । वस्तुतस्तुभावाभावप्रतियोगिकान्योन्याभावोनासत्यंगीकारार्हः । तथात्वेसिद्धांतेतस्यधर्मिस्वरूपत्वेनासत्त्वप्राप्तेः । नचतथात्वेभावाभावयोरसतश्चभेदाभावेन भावाभावयोरसतश्चासत्त्वाद्यापत्तिरितिवाच्यं । असतितदुभयप्रतियोगिकभेदाभावेपितयोरसत्प्रतियोगिकभेदसद्भावेनोक्तापत्तेरभावात् । अतएवन्यायामृतेविप्रतिपत्तिग्रं

व्याघातात् । मैवं । भावलक्षणाक्रांतत्वात् । परतंत्रंभावाभावतयाद्विधैव । नपुनरेक
विधं । नापित्रिविधमित्येवंपरोविभागः । नपुनःपरतंत्रमेवभावाभावात्मकमिति ।

थेविद्यमानं "ब्रह्मान्य"दित्येतदेवमेवव्याचख्युरभियुक्ताः । विकल्पितपक्षेषुप्रथममंगीकृत्यशंकांपरिहरति ॥ मैवमिति ॥ भावस्ययल्लक्षणमुक्तंतेनविशिष्टत्वादित्यर्थः । भावत्वादितिवक्तव्येयद्भावलक्षणाक्रांतत्वादितिवचनं तत् नपुनर्लक्षणासंभवनाशंकानिरासायप्रयासःकर्तव्यइतिलाघवार्थमितिज्ञातव्यं । तर्हि "भावाभावौद्विधेतर"दित्युक्तिरयुक्तेत्यतआह ॥ परतंत्रमिति ॥ विभागएवंपरः । एवमेतत्परमुद्देश्यंयस्यसतथोक्तः । तथाचान्यनिषेधकत्वाभावादस्यमूलस्यविष्णोर्भावत्वमुपपद्यतइतिभावः । ननुस्वतंत्रमस्वतंत्रंचेत्युक्त्वा उक्त्वाचभावाभावावित्यादि स्वतंत्रतत्वंभावइत्यंगीकरणात् वरंयथाभावे

निविशेतस्वतंत्रतत्वंतथाविभजनमित्याशंकते ॥ यथेति ॥ तथेत्यनुपदमेवस्पष्टीभविष्यति । भावेषु बहुवचनमाद्यर्थं । भावनित्यचेतनादिषु । भावइत्येकवचनांतपाठोपिक्वचिद्दृश्यते भावकोटावितितदाऽर्थः । अत्रभावपदंचनित्यचेतनाद्युपलक्षकं । अतएव "भावोद्विविधः । नित्योऽनित्यश्च । नित्योपिद्विविधः । चेतनोऽचेतनश्चे"त्यनुपदमेववक्ष्यति । परिहरति ॥ नैवंशंक्यमिति ॥ तत् स्वतंत्रतत्वं । हिर्हेतौ । प्रधानतया मुख्यतया । सर्वविविक्तं रमादिसर्वजगद्विविक्तं । वेदि

यथा(भावे)भावेषुस्वतंत्रतत्वंप्रविशातितथाविभागःक्रियतामितिचेन्नैवंशंक्यं ।
तद्धिप्रधानतयासर्वविविक्तमेववेदितव्यं । अन्यथा द्विविधंतत्वं । भावोऽभा
वश्च । भावो(पि)द्विविधः । नित्योऽनित्यश्च । नित्यो(पि)द्विविधः । चेतनोऽ
चेतनश्च । चेतनोपिद्विविधः । स्वतंत्रोस्वतंत्रश्चेतिकर्तव्यं । एवंसतिनप्राधान्ये
नप्रतिपत्तिःस्यात् । भगवद्व्यतिरिक्तस्यसर्वस्याप्यस्वातंत्र्यप्रतीतिर्नस्यात् ।

तव्यमितितव्यप्रत्ययेन इष्टसाधनज्ञानंचेदमेव । नान्यदितिवैधोयमर्थइतिद्योतयति । तथाविभागःक्रियतामित्युक्तंविशदयति ॥ अन्यथेत्यादिना ॥ अन्यथा असद्रीत्याविभागाकरणे । अन्यथेतिकर्तव्यमित्यन्वयः । एवंसति उक्तरीत्या विभागेसति । प्रतिपत्तिः ज्ञानं । स्वतंत्रतत्वस्येतियोज्यं ॥ अस्वातंत्र्यप्रतीतिर्नस्यादिति ॥ नचेष्टापत्तिः । तज्ज्ञान

स्यमोक्षसाधनत्वेन "यएत"दित्यादिनोक्तेरितिभावः । अस्मिन्पक्षे सैद्धांतिकविभागपक्षे । इति इतिहेतोः । सममेव यथा भावत्वादिनाविभागेविष्णोःप्राधान्याज्ञानंदूषणं तथास्वतंत्रत्वादिनाविभागेपितस्यभावत्वाद्यज्ञानरूपंदूषणंसममेवेत्यर्थः । कुतोनेत्यतआह ॥ पुरुषार्थेति ॥ स्वतंत्रास्वतंत्रतत्वयोःप्राधान्याप्राधान्यज्ञानस्यातिशयेनमोक्षहेतुत्वादितरस्यातथात्वादित्यर्थः । भावत्वादिनाविभागेदूषणांतरमाह ॥ अभावादीनामिति ॥ यथाऽस्मन्मतेस्वतंत्रतत्वादीनांभावत्वचेतनत्वनित्यत्वाद्यलाभस्तथात्वत्पक्षेपि ध्वंसात्यंताभावयोर्नित्यत्वं प्रागभावस्यानित्यत्वं त्रयाणामचेतनत्वास्वतंत्रत्वे प्रधानादी

अस्मिन्पक्षेस्वतंत्रस्यभावत्वंनविदितंस्यादितिसममेवेतिचेन्न । पुरुषार्थो
पयोगानुपयोगाभ्यांविशेषात् । अभावादीनांनित्यत्वाद्यनुक्तिश्चसमैव ।
तस्माद्यथान्यासमेवास्तु । अथास्वतंत्रंचेतनत्वादिनैवविभज्यतां ।

नामचेतनत्वास्वतंत्रत्वे घटादीनामनित्यत्वमित्याद्यलाभः । सतिचैवंसाम्येपूर्वोपदर्शितमोक्षोपयोगिनःस्वतंत्रास्वतंत्रतत्वयोःप्राधान्याप्राधान्यरूपेणज्ञानस्यालाभोतिरिच्यतइतिभावः । निगमयति ॥ तस्मादिति ॥ यथान्यासं आचार्यरचितविभागविन्यासमनतिक्रम्य । यथाऽसादृश्यइत्यव्ययीभावः । नाव्ययीभावादतोम्त्वपंचम्याइत्यम् । ननु भवतुभवदुक्तभंग्यैषसामान्यविभागः । अस्वतंत्रतत्वस्यचेतनत्वादिनाकुतोनविभागःक्रियतइत्याशयेनशंकते ॥ अथेत्यादिना विभज्यतामि

त्यंतेन । सिद्धांतीद्वेधाविकल्पयति ॥ किमिति ॥ विभज्य विभागंकृत्वा । भावाभावतयाविभागःकर्तव्यः । अनंत रमितितुक्त्वासामर्थ्येनैवलभ्यतइतिनोक्तं । अविशेषात् । वैपरीत्यकृतविशेषाभावादित्यर्थः । विशेषंशंकते ॥ अभाव स्येति ॥ एवंसति ॥ अस्वतंत्रस्यभावत्वादिनाविभागेसति । तथासति त्वदुक्तरीत्याविभागेसति । नोक्तंस्यात् । तस्या स्वतंत्रप्रभेदत्वादितिभावः । साम्येसति भवतुमदुक्तरीत्यापिविभागोविनिगमकाभावादितिशंकते ॥ तर्हीति ॥ अस्य

किंचेतनत्वादिनाविभज्यभावाभावतयाविभागःकर्तव्यउतायंनकर्तव्यएव। नाद्यः। विशेषाभावात् । अभावस्याचेतनत्वमेवंसतिनोक्तंस्यादितिचेत्तथासतिचेतन स्यभावत्वमपिनोक्तंस्यादितिसमं । तर्हिकेनविशेषेणास्यप्राधान्यमितिचेत् वा दिविप्रतिपत्तिभावाभावाभ्यांविशेषात् । अतएवनद्वितीयोपीति । अभावएव

भावादिप्रविभागस्य । सिद्धांतीविशेषंदर्शयति ॥ वादीति ॥ वादिनां सिद्धांतिनां विप्रतिपत्तेः । विवादस्य । भावातिरि क्ताभावे चेतनातिरिक्ताचेतने सत्त्वासत्त्वरूपवैलक्षण्यादित्यर्थः । भावातिरिक्ताभावोस्तीत्यत्रवादिविप्रतिपत्तिसद्भावात्तन्नि रासायविप्रतिपन्नचेतनाचेतनविभागकथनात्प्राथम्यंयुक्तमितिभावः । अतएव अंततोगत्वानिराकर्तव्यवादिविवादरूपवि शेषसद्भावादेवेत्यर्थः । द्वितीयः नकर्तव्यइतिपक्षः । भावाभावविभागकथनानुपपत्तिंप्राभाकररीत्याशंकते ॥ अभावएव

नास्तीति ॥ अभावएवयद्यनिष्पन्नस्वरूपस्तदादूरेतद्धटितविभागकथनमितिविभागोनसंभवतीत्यनेनसूचयति । परिहरति ॥ तदसदिति ॥ नहिवाङ्मात्रेणार्थसिद्धिरित्यतोहेतुमाह ॥ नास्तीतिप्रतीतेरिति ॥ प्रतीतिर्यायासासर्वापिसविषया । तथाच घटोनास्तीतिप्रत्ययस्यापिविषयेणभाव्यं । नचसनास्तीत्यपलापोयुक्तः । अनुभवविरोधादितिभावः । प्रतीतिपदेन तद्विषयस्याभावस्योपलक्षणं । तेनात्रघटोनास्तीतिप्रतीतिविषयस्यतस्यदुरपलापत्वादित्यर्थइत्यप्याहुः । नप्रतीत्यन्यथोपप त्त्याभावकल्पनायुक्ता । साचाधिकरणादिगोचरांगीकर्तुमुचितेत्याशंकते ॥ घटोनास्तीतिप्रतीतिरिति ॥ अभावादेर्विष

नास्तीतिकेचित् । तदसत् । नास्तीतिप्रतीतेर्दुरपह्नवत्वात् । घटोनास्तीतिप्रती
तिर्भूतलमात्रविषयेतिचेत् । मात्रेतिकिंभूतलमेवोच्यतउतातिरिक्तंकिंचित् ।
आद्येघटवत्यपिप्रसंगः । अतिरिक्तोपिघटश्चेदु(क्त)क्तोदोषः । भावांतरंचे

यत्वमनंगीकुर्वाणोभूतलस्यैवविषयत्वंवर्णयांबभूवेतिमात्रपदव्यावर्त्याभावात्तद्वैयर्थ्यंविकल्पमुखेनाह ॥ मात्रेतीति ॥ मात्रां तपदेनेत्यर्थः । भूतलमेव भूतलपदशक्यमेव । अतिरिक्तं भूतलपदवाच्यात् । सामग्रीसद्भावेप्रतीत्यभावानुपपत्तेर्घटव त्यपिभूतलेभूतलस्यसत्त्वान्नास्तिघटइतिप्रतीतिःस्यादित्यनिष्टंप्रथमपक्षेप्रसंजयति ॥ आद्यइति ॥ अतिरिक्तोभूतलाद्धटएव चेत् सत्यपिघटेनास्तीतिप्रतीतिविषयस्यभूतलस्यसत्त्वान्नास्तीतिप्रतीतिरवर्जनीयेत्यातिरिक्तोघटइतिवक्तुंनयुक्तइतिवक्ति ॥ अतिरिक्तइति । उक्तोदोषः अतिप्रसंगरूपः । द्वितीयंकल्पंविकल्पयति ॥ भावांतरंचेदिति ॥ प्रतियोगिभूताद्धटाद

न्योभावश्चेदित्यर्थः । दोषमाविष्करोति ॥ रूपवतीति ॥ गंधघटाभ्यांप्रतियोग्यधिकरणभूताभ्यांभिन्नस्यरूपरूपभावांतर स्यविषयस्यसद्भावाद्गंधोनास्तीतिप्रतीतिःस्यादित्यर्थः । दोषप्रमोषाययतते ॥ नन्विति ॥ घटप्रतियोगिकोऽभावोघटाभावः । सोस्यास्तीतिघटाभाववत् भूतलं । तस्मिन्संबध्यते वर्तते । अभावपदंध्वंसपरं । अथवा भावःसत्त्वं तदभावोसत्त्वं संबं धाभावइत्यर्थः । ततश्चघटैतद्भूतलसंसर्गाभावउच्यते । यद्वा घटात्यंताभावः अभिनवगदाद्युक्तप्रकारेणप्रामाणिकप्रतियो गिकोवर्ततइतिपरोक्तानुवादतयावाग्राह्यः । अप्रामाणिकप्रतियोग्येव नापिपरोक्तानुवादइतिपक्षेपूर्वोक्तःसंसर्गाभावइतिवि

द्रूपवतिघटेगंधोनास्तीतिप्रतीतिप्रसंगः । ननुघटाभावोघटाभाववतिभूतलेसंबध्य
तउतघटवति । नाद्यः । आत्माश्रयादिदोषप्रसंगात् । नद्वितीयः । विरोधात् ।

वेकोद्रष्टव्यः । उतघटवति संबध्यतइतिवर्तते । संबध्यतइतिनलडर्थविवक्षा । ततश्चविकल्पःसंभवति । विशेषस्तुपांडुरं गीयैतद्व्याख्यानतोऽवगंतव्यः । स्वसंबद्धेभूतलेवर्ततइतिमनुषेचेत्स्वस्याश्रयकोटौनिविष्टतयाऽऽत्माश्रयः । स्वातिरिक्तैका भावसंबद्धइतिजानासिचेत्स्वातिरिक्ताभावः स्वसंबद्धश्चेदात्माश्रयः । अथस्वान्यैतदभावसंबद्धश्चेत्परस्पराश्रयः । अभाव त्रितयस्वीकारेचक्रकं । अनवधिकाभावोररीकारेऽनवस्थाचभवेयुरित्याह ॥ नाद्यः । आत्माश्रयादिप्रसंगादिति ॥ उत घटवतीतिद्वितीयपक्षमधिक्षिपति ॥ नद्वितीयइति ॥ कुतइत्यतआह ॥ विरोधादिति ॥ तद्वतितदभावसंबंधोव्याघा

तान्नांगीकारार्हः । परिशेषेसिद्धमाह ॥ अतइति ॥ अतः घटाभाववद्धटवदितिपक्षद्वयस्याप्यात्माश्रयादिविरोधाद्दुष्टत्वात् । वक्तव्यं त्वयेतिशेषः । भूतलमात्रइतिमात्रपदेनघटघटाभावाविशेषितंभूतलंग्राह्यमितिसूचयति ॥ तदेवेति ॥ निषेधप्रक्रियांविकल्पमुखेनारभते ॥ नेति ॥ अयंप्रश्नः घटाभावःकुत्रसंबध्यतइतिप्रश्नः । तद्वाक्यं । यद्वा प्रश्नः प्रश्नार्थः । विविच्यतां विव्रियतां । विवरणप्रकारमेवविवृणोति ॥ यदीति ॥ अभावसंबंधात् घटाभावसंबंधात् । क्वचिद्यदिघटाभावसंबं

अतोवक्तव्यंभूतलमात्रइति । तदेवास्तुनास्तीतिप्रतीतिविषयइतिचेन्न । प्रश्नएवायंविविच्यतां । यद्यभावसंबंधात्प्राक्कीदृशंभूतलमिति । यदिवासंबंधसमयेकीदृशमिति । यद्वा यद्यभावादिदंविविच्येततदाकीदृशंनामस्यादिति । आद्येसघटमित्येवोत्तरं । द्वितीयेघटाभाववदिति । तृतीये

धादितिपाठेऽर्थस्तुस्पष्टः ॥ यदिवेति ॥ संबंधसमये अभावेनसाकंसंबंधसमये । अभावात् घटाभावात् । इदं भूतलं । विविच्येत वियुज्येत । तदा तर्हि ॥ कीदृशंनामस्यादितीति ॥ कीदृशंस्यान्नामेत्यन्वयः । विकल्पक्रमानुगुणमुत्तरक्रममाह ॥ आद्यइत्यादिना ॥ आद्ये घटाभावसंबंधात्प्राक्कीदृशमितिपक्षे । सघटं घटसंबद्धं । उत्तरं वाच्यमितिशेषः । उत्तरत्र उत्तरंवाच्यमित्यपिशेषः । द्वितीये संबंधसमयेकीदृशमितिपक्षे ॥ तृतीयइति ॥ यद्यभावादिदमित्यादितृतीये ।

विवेकः वियोगः । अभावनाशकृतःतदाऽभावस्यनष्टत्वाद्घटसंबद्धमिति । घटसंसर्गप्रागभावनाशस्यघटसंसर्गरूपत्वात् । बुद्धिकृतः विवेकइत्यनुवर्तते । बुद्ध्यैवांगीकृतः । तदा तर्हि । तयैवघटसंसर्गप्रतीतिमदित्युत्तरं । नन्वभावःकुत्रसंबध्यतइतिप्रश्नार्थस्यलोकोक्तमुत्तरमस्तु । तथापिनघटाभावोघटाभाववतिदेशेतथाविधकालेवाऽस्ति । आत्माश्रयादिप्राप्तेः । नापिघटवतिदेशेकालेवा । विरोधादिति पक्षद्वयेपिदोषसद्भावादित्यतिरिक्ताभाववादोनयुज्यतइत्याशंकमानंप्रतिविपक्षेबाधकमाह ॥ अन्यथेति ॥ अधिकरणभिन्नाभावानंगीकारे । भावप्रतिक्षेपः घटोभूतलदेशेघटवतितथाविधेकालेवावर्ततइति

यदिविवेकोवस्तुकृतस्तदाऽभावस्यनष्टत्वाद्घटवदिति । यदिबुद्धिकृतस्तदाबु
द्ध्यैवघटप्रसक्तिमदिति । अन्यथैवंभावप्रतिक्षेपोपिस्यादित्यास्तांविस्तरः ।

चेदात्माश्रयादिकं । घटाभाववतिचेद्विरोधइत्येवंघटादिभावप्रतिक्षेपोपिस्यादित्यतिप्रसंगोद्रष्टव्यः । यथैतत्परिहाराययतसेतथाहमपियते । यश्चोभयोःसमोदोषःपरिहारोपिवासमइतिदोषसाम्यमनेनदर्शयति । नहिपरांगन्यायेनदोषसाम्योपपादनमेवदोषइत्यतोयथाप्रामाणिकत्वाद्गुणानामपलापोऽयुक्तस्तथामानसिद्धत्वादभावादीनामपलापोनयुक्तइतिग्रंथगौरवभीरवउपसंहरंति ॥ इतीति ॥ वक्तव्यंसर्वमर्थादुक्तमतोनशब्दतोविवरणंक्रियतइतिविस्तरशब्दंप्रयुंजानःसूचयामासेतिज्ञेयं । प्राग्विधाशब्देनवात्रधाप्रत्ययेनावांतरभेदवंताविितिसूचितं । तत्रप्रथमोद्दिष्टत्वाद्भावविभागएवादौबोधनीयः । तथापिप्रथमंज्या

यस्त्वेनबुद्धावनारोहात्सूचीकटाहन्यायेनाभावविभागमेवादावाहेत्याह ॥ द्विधेत्युक्त्येति ॥ सूचीकटाहन्यायेनेत्युपलक्षणं । परेणानंगीकृताभावांगीकारणप्रसंगसंनिधापितोऽभावइति तस्यैवादौविभागप्रदर्शनमावश्यकमित्यपिनिरूपणप्रयोजनमव धेयं । मूले "प्राक्प्रध्वंससदात्वेने"त्यत्रद्वंद्वांतेश्रूयमाणस्त्वप्रत्ययःसर्वत्रान्वेतव्यइत्याह ॥ प्राक्त्वेनेत्यादिना ॥ प्राक्त्वा दितादात्म्यमभावस्यकिमित्यतः तृतीयायाविवक्षितार्थाभिधानेनसमाधिमभिधत्ते ॥ उपलक्षितइति ॥ व्यावर्तकधर्मोपेत इत्यर्थः । इदमुक्तंभवति । प्रागितिध्वंसात्यंताभावाभ्यां प्रध्वंसेतिप्रागभावात्यंताभावाभ्यां अत्यंतेतिप्रागभावप्रध्वंसाभ्या

द्विधेत्युक्त्याभावाभावयोरवांतरभेदोस्तीतिसूचितं । तत्रभावनिरूपणादभावनिरूपणस्याल्पत्वात् सूचीकटाहन्यायेन पश्चादुद्दिष्टमप्यभावमादौविभागेनोद्दिशति ॥ प्राक्प्रध्वंससदात्वेनत्रिविधोऽ भावइष्यते ॥ प्राक्त्वेनप्रध्वंसत्वेनसदात्वेनोपलक्षितोऽभावस्त्रिविधइष्यते । प्रामाणिकैरितिशेषः ।

मिति परस्परव्यावर्तकमतिजनकप्रागादिविशेषणोपेतोऽभावस्त्रिविधइति । अभावएवयदांगीकर्तुंनोचितस्तदादूरेतद्विभाग कथेत्यतःप्रामाणिकत्वान्नागणनीयइतिभणति ॥ इष्यतइति ॥ अनुवादोऽन्वयप्रदर्शनाय । बुद्धिमत्त्वावच्छेदेनेदंसंमतमि तिवक्तुंतत्रापेक्षितंपूरयति ॥ प्रामाणिकैरितिशेषइति ॥ अप्रामाणिकप्रतियोगिकत्वेनजघन्यत्वात् प्रामाणिकप्रतियोगि कत्वेनकैश्चिदंगीकृतत्वेपिप्रामाणिकाप्रामाणिकप्रतियोगिकत्वाद्गौरवात् ततःप्राक्केवलप्रामाणिकप्रतियोगिकौप्रागभावध्वंसौ निरूप्यौ । तत्रापिधर्मितोपिपूर्वभावीतथानिरूप्यइतितथैवमूलकृन्निर्दिदेश । तमेवानुसृत्यप्राक्त्वेनप्रध्वंसत्वेनसदात्वेनेति

टिटीकिरेटीकाकृत्यादाइतिबोध्यं । निर्देशानुसारात्ताँल्लक्षयति ॥ उत्तरैकावधिरिति ॥ उत्तरः स्वाधिकरणकालापेक्षयाऽनंतरभावीप्रतियोग्यधिकरणकालः । सएकः केवलं । अवधिः मर्यादाभूतोयस्य सप्रागभावइत्यर्थः । अभावइत्येवोक्तेनिरवधिकेऽत्यंताभावेतिऽव्याप्तिः । तन्निरासार्थमवधिमानित्युक्तं । तावत्येवोदितेप्रध्वंसाभावेऽतिव्याप्तिः । तन्निराकृत्याउत्तरेतिचोक्तं । उत्तरावधित्वंप्रागभावस्यलक्षणमित्येवोक्तेघटसामग्र्यामतिव्याप्तिः । तत्परिजिहीर्षुरभाषताभावइति । घटनिष्ठान्योन्याभावपराकृत्याएकेतिपदं । इदंचानित्यगतभेदस्यानित्यत्वमितिटीकापक्षमाश्रित्येतिज्ञेयं । उत्तरैकावधिरित्येवोक्तेप्रागभाववर्तिप्रमेयत्वाभिधेयत्वसत्त्वादिष्वतिव्याप्तिःस्यात्तदर्थमभावेतिवर्णयांबभूवुः । प्रागभावनिष्ठाभिधेयत्वादेर्निष्प्र

उत्तरैकावधिरभावःप्रागभावः । प्रतियोग्युत्पत्तेःप्रागेवाभावोस्त्यु
त्पन्नेतुतस्मिन्नास्तीतिकृत्वा । पूर्वैकावधिरभावःप्रध्वंसाभावः ।

तियोगिकत्वेनभावत्वादभावइत्यनेनतद्व्यावृत्तिः । विशिष्टस्यघटप्रागभावनिष्ठान्योन्याभावेऽतिव्याप्तिरितिचेन्न । विवक्षावशाद्धर्म्यतिरिक्ताभावस्यैवाभावपदेनग्रहणात् । एकपदंस्वरूपकथनपरमितिज्ञेयं । तदेवोपपादयति ॥ प्रतियोग्युत्पत्तेरिति ॥ उत्पत्तेः प्राक् पूर्वं । अभावः घटाभावः । तस्मिन् घटे । उत्पन्नेसनास्तीतिकृत्वा उत्तरैकावधिरभावःप्रागभावइत्यर्थः । क्रमागतंप्रध्वंसंलक्षयति ॥ पूर्वैकावधिरिति ॥ स्वाधारकालात्पूर्वभाव्येकोवधिर्मर्यादारूपःप्रतियोग्यधिकरणांतिमक्षणात्मकःकालोयस्य सोभावःप्रध्वंसः । अत्यंताभावेऽतिव्याप्तितिरस्कृत्याअवधिमानिति । प्रागभावेऽतिव्यापनापनुत्यैपूर्वपदं ।

घटेचतांविघटयितुमभावपदं । पूर्ववत्पूर्वैकावधिरित्युक्तेध्वंसगतप्रमेयत्वादौसत्वाल्लक्षणस्यातिव्याप्तिरितितद्व्युदासायाभाव पदं । नचविशिष्टस्यध्वंसगतान्योन्याभावेतिव्याप्तिरितिवाच्यं । अभावस्यधर्म्यतिरिक्तस्यैवपूर्ववद्विवक्षणादनतिव्याप्तेः । एकपदमेकंपूर्ववदेवस्वरूपोपष्टंभकंज्ञेयं । लक्ष्येलक्षणमुपपादयति ॥ प्रतियोगीति ॥ प्रतियोगीघटः । तद्ध्वंसानंतरंअत्रप्र तियोगीध्वंस्यतेऽनेनेतिव्युत्पत्त्याप्रध्वंसशब्दःप्रध्वंसजनकाव्यवहितपूर्ववृत्तिमुद्गरप्रहारादिरूपसामग्रीपरोबोध्यः । तेनप्रध्वं सस्योत्तरावधिशून्यत्वात्कथंप्रध्वंसानंतरमित्युक्तिरितिपरास्तं । प्राक् प्रध्वंसात्पूर्वं । घटध्वंसघटप्रागभावयोःपूर्वैकावधिरु

प्रतियोगिप्रध्वंसानंतरमेवाभावोनतुप्रागस्तीति । नचैवं प्रागभावप्रध्वंसः प्रध्वंसप्रागभावइ तिप्रवाहौप्रसज्ज्येते । प्रतियोगिनएवप्रागभावप्रध्वंसत्वेनप्रध्वंसप्रागभावत्वेनचांगीकृत त्वात् । तर्हिघटप्रध्वंसोनामप्रागभावनिवृत्तेर्निवृत्तिरितिप्रागभावोन्मज्जनप्रसंगइतिचेन्न ।

त्तरैकावधिरितिलक्षणेप्रागभावप्रतियोगिकध्वंसध्वंसप्रतियोगिकप्रागभावयोरपिप्रसक्तौतत्प्रवाहौस्यातामित्याशंक्यपरिहरति ॥ नचैवमिति ॥ प्रतियोगिनोघटादेःप्रागभावप्रध्वंसरूपत्वेनस्वध्वंसप्रागभावत्वेनचांगीकृतत्वेन प्रावाहिक्याःपरंपरायाअप्र सक्तेः ॥ तर्हीति ॥ यदिप्रतियोगिनःप्रागभावनिवृत्तिरूपत्वं तर्हीत्यर्थः ॥ प्रागभावेति ॥ घटप्रागभावेत्यर्थः । निवृत्तेः तद्ध्वंसस्य । तस्यैवप्रागभावसामग्रीत्वेन प्रागभावस्यपुनरुन्मज्जनं प्रत्यावृत्तिः स्यादित्यर्थः । कारणसामग्र्यांसत्यांकार्यावश्यं भावनैयत्यादित्यनिष्टापादनमित्यत्रतात्पर्यंज्ञेयं । यथाघटस्यप्रागभावकालान्यकालिकत्वेनस्वप्रागभावविरोधित्वं तथाघटप्र

ध्वंसस्यापिस्वप्रागभावकालान्यकालिकत्वेनतद्वद्प्रागभावविरोधिनितदुन्मज्जनानापत्तेरित्युत्तरयति ॥ घटवदिति ॥ यथा घटसत्तादशायांघटप्रागभावोनास्ति । घटस्यप्रागभावविरोधित्वात् । एवंघटप्रागभावनिवृत्तिर्नामघटप्रागभावध्वंसः । सघटएव । तन्निवृत्तिर्नामघटध्वंसएव । तत्सत्तादशायांनप्रागभावापत्तिः । घटध्वंसस्यापिप्रागभावविरोधित्वादित्यर्थइत्याहुः । अवशिष्टमभावंलक्षयति ॥ निरवधिकइति ॥ उक्तैरेकावधिकप्रागभावपूर्वैकावधिकप्रध्वंसाभावयोरनतिव्याप्त्यैनिरवधिकइति । निष्क्रांतोवधेरितिनिरवधिकइति । अव्याकृताकाशेश्वरादिव्युदासायाभावइति । नचाकाशादिनिष्ठान्योन्याभा

घटवत्तद्ध्वंसस्यापितद्विरोधित्वात् । निरवधिकोऽभावःसदाऽभावः ।
सदाऽभावोस्तीतिकृत्वा । अथात्यंताभावइतिप्रसिद्धसंज्ञातिक्रमेणस
दाभावइतिसंज्ञांतरकरणंकिमर्थं । लक्षणस्याप्युद्देशेनैवसूचनार्थं ।

वेऽतिव्याप्तिरितिवाच्यं । धर्मिभिन्नाभावेतिविवक्षणात् । तन्निमित्तमुक्तंभयति ॥ सदाभावोस्तीतिकृत्वेति ॥ अत्यंताभावोनिरवधिकइतिसंबंधः । किंलोकप्रसिद्धात्यंताभावसंज्ञांविहाय, विधायचनामापूर्वंनिर्दिदेशदेशिकवरइतिशंकते ॥ अत्यंताभावइतीति ॥ उत्तरमीरयति ॥ लक्षणस्येति ॥ लक्षणस्य अत्यंताभावलक्षणस्य निरवधिकाभाववत्वस्य । ज्ञापनार्थमित्यर्थः । मतांतरनिराकरणमपिविलक्षणलक्षणकरणफलमितिपरपराकरणप्रकारव्युत्पादनंविनाऽनुवादेननशक्यज्ञा

नमितितदनुवदति ॥ यच्चेति ॥ उक्तं स्वग्रंथेप्रतिपादितं । तदेवप्रतिपादयति ॥ संसर्गप्रतियोगिकाभावइतीति ॥
निदर्शयति ॥ यथेति ॥ एतद्घटस्यैतद्भूतलस्यचयःसंसर्गस्तदभावोत्यंताभावइति । अतिप्रसंगवारणायोभयत्रैतत्पदं । तदपि
तल्लक्षणमपि । एतत् विलक्षणलक्षणकरणं । निराकरणप्रकारंदर्शयति ॥ तस्येति ॥ संसर्गप्रतियोगिकाभावस्य । घटोत्र
नास्तीतिप्रतीतिविषयस्यघटैतद्भूतलसंसर्गाभावस्य घटानयनापनयनयोर्नाशजन्मनोःसंभवेन निरवधिकाभावत्वंनोपपद्यत
इत्याशयः । त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिकाभावइतिमतंयद्यपिपर्यवस्यति सदातनाभावत्वइति । तथापि तत्रप्रामा

यच्चान्यैरत्यंताभावस्वरूपमुक्तंसंसर्गप्रतियोगिकाभावोत्यंताभावइति।
यथैतद्घटैतद्भूतलसंसर्गाभावइति । तदपिनिराकर्तुमेतत् । तस्य
निरवधिकत्वाभावात् । तर्ह्युदाहृतश्चतुर्थःस्यादितिचेन्न । तस्यापि

णिकस्यघटस्यप्रतियोगित्वं प्रतियोग्यवरुद्धोविद्यमानोपिनस्फुरत्यभावइतिमन्वते । मन्मतेत्वप्रामाणिकस्यैवप्रतियोगित्वं
प्रतियोगिनाप्रामाणिकेनयथाभावस्यविरोधस्तथातत्सदृशेनापिविरोधइति नघटवत्यपिघटोनास्तीत्यतिप्रसक्त्यापत्तिदोषइत्या
वयोर्विशेषः । विशेषस्तु "निर्दोषाशेषसद्गुण"मितितत्वनिर्णयटिप्पण्यादितोज्ञेयः । तर्हि निरवधिकाभावत्वेनात्यंताभावां
गीकारे । उदाहृतः प्रमेयविशेषःसंसर्गप्रतियोगिकाभावः । उत्तरमाह ॥ तस्यापीति ॥ संसर्गप्रतियोगिकाभावस्यापि ॥

यथासंभवमिति ॥ प्रागभावादिषुयथासंभवमंतर्भावोवाच्यः । यद्भूतलंघटेननसंयुज्यतेतत्रघटप्रागभावइतितत्रांतर्भावः । यदावियुज्यतेतदाप्रध्वंसे । यद्भूतलंकदापिघटेननसंयुज्यतेतत्रसंसर्गाभावस्यात्यंताभावेऽतर्भावोज्ञेयः । इष्यतइत्यस्यनिराकार्यपरमतव्युत्पादनेनसाफल्यंसंपादयितुमवतारयति ॥ एकइति ॥ संसर्गाभावोऽन्योन्याभावश्चेतिद्विविधाऽभावइति वैशेषिकभाषितंसाक्षादभावविवक्षया । संसर्गाभावीयत्रिरूप्यान्योन्याभावेनैकेनाधिकेनचसह चातुर्विध्यमितिध्येयं ।

यथासंभवंप्रागभावादिष्वंतर्भावात् । एकेब्रुवते । संसर्गाभावो
ऽन्योन्याभावश्चेतिद्विविधएवाभावइति । अन्येतुप्राक्प्रध्वंसात्यं
तान्योन्याभावात्माचतुर्विधइति। तदुभयंनिराकर्तुमिष्यतइत्युक्तं ।
अन्योन्याभावोहिभेदएव । सचस्वरूपमेवेत्यन्यत्रोपपादितं ।

प्रागभावत्वादिकंतुसंसर्गाभावांतरालिकोपाधिरितिच । अपरेत्वक्षचरणानुसारिणः प्राक्प्रध्वंसात्यंताभावाअन्योन्याभावश्चेतिचत्वारइतिजगदुः । अत्राभावविभाजकोपाधिःप्रागभावत्वादिरेवेतिपक्षद्वयेप्यभावचतुष्कताऽऽविष्कृताभवतीतिवेदितव्यं। इष्यते प्रामाणिकैरितिशेषः । तदप्रामाणिकत्वस्थेम्ने दूषणप्रकारमाकारयति ॥ अन्योन्याभावोहीति ॥ यतोऽन्योन्याभावोभेदः सचधर्मिस्वरूपएव। अन्यत्र तत्वनिर्णयादौ। तथाचतस्यपृथक्त्वेनवचनमनुचितमितिभावः । मत

द्वयेपिदूषणांतरमाह ॥ कार्यकारणयोरिति ॥ उपादानोपादेययोरित्यर्थः । संसर्गः संबंधिभिन्नःसमवायरूपः । तस्य अन्यत्र "समवायाभ्युपगमाच्चसाम्यादनवस्थिते"रित्यादिसूत्रभाष्यादौ । इदमत्राकूतं । संसर्गाभावत्वं संसर्गप्रतियोगिकाभावत्वंवा संसर्गारोपपूर्वकप्रतीतिविषयाभावत्वंवा । नप्रथमः । उपादानोपादेययोःसंसर्गेसत्युपादानेप्राक्कालसंबंधस्तत्संसर्गप्रतियोगिकोभावःप्रागभावस्तथोत्तरसंबंधोध्वंसइतिचस्यात् । तयोरभेदांगीकारात्संसर्गस्यैवाभावान्नैवमंगीकर्तुंशक्यं । प्रागभावादीनांघटादिप्रतियोगिकतयैवोपलंभेनसंसर्गप्रतियोगिकत्वस्यत्वयाप्यनंगीकाराच्च । नद्वितीयः । मृत्पिंडेयःकश्चि

**कार्यकारणयोःसंसर्गस्यान्यत्रनिराकृतत्वेनप्रागभावप्रध्वंसाभावयोःसंसर्गाभावत्वानुपपत्तेश्चेति । भावंविभज्यदर्शयति ॥ चेतनाचेतनत्वेनभावोपिद्विविधोमतः ॥ नकेवलमभावोभेदवान्किंतुभावोपीत्यपिशब्दः ।**

द्वटसंसर्गआरोप्यतउतसमवायः । नाद्यः । विरोधिनःसंसर्गसामान्यस्यसत्त्वेनारोपोदुरुपपादः । नद्वितीयः । समवायस्यानंगीकारपराहतत्वात् । विस्तरस्त्वदृश्यत्वाधिकरणसुधातोऽवगंतव्यः । ननु "भावोपी"त्यत्रत्यापिशब्दस्याभावेपिद्वित्वसमुच्चायकत्वं "प्राक्प्रध्वंससदात्वेने"त्यादिकेनविरुद्धं । नेतःसमुच्चेयांतरमस्ति । अतोवैयर्थ्यापरपर्यायवाक्यालंकारतांगीकारएवशरणमित्यतः भावीयचेतनाचेतनत्वरूपावांतरविभागस्यतत्समुच्चेयस्यसत्त्वान्नव्यर्थोपिरित्याह ॥ नकेवलमिति ॥ शब्द्यतेकथ्यतइतिशब्दशब्दोऽर्थपरः । शब्दउपसर्गादाविष्कारेच अनुपसर्गाच्चेतिचुरादिशब्दधातोःकर्मणिघञ् । ततश्चापेः

शब्दोपेरर्थइत्यर्थः । तेन "किंतुभावोपीत्यपिशब्द"इतिटीकानन्वयशंकापराकृताज्ञेया । इतीत्यस्येत्यर्थइतिविवक्षणाद्धास माधिर्बोध्यः । ननु परतंत्रावांतरभेदस्यभावस्यचेतनाचेतनरूपावांतरभेदवत्त्वे भगवतोऽभावस्यच चेतनाचेतनत्वेऽक्रमाज्ञो क्तेस्यातां । नचतयोर्नस्तएवतेइतिवाच्यं । तथासति "चेतनश्चेतनाना"मित्याद्यागमेन, अभावीयाचेतनत्वग्राहकप्रत्यक्षेण चविरोधापत्तेः । ज्ञापकाभावेप्यंगीकारे विष्णोरभावस्यचाचेतनत्वंचेतनत्वंचकिंनस्यादित्यतः अस्यमूलस्यान्यनिषेधपरत्वा भावेन भावश्चेतनोचेतनश्चेतिद्विविधः । नपुनरेकविधोनापित्रिविधइत्येवंपरत्वाद्भगवदभावादीनांचेतनाचेतनत्वादिकंवक्तुं शक्यतइत्याह ॥ चेतयतीतीति ॥ एतेन चेतनशब्दस्य "प्राणीतुचेतनोजन्मी"त्याद्यभिधानेषुजीवेरूढत्वात्कथमनेनमूले

**चेतयतीतिचेतनः । अनेवंविधोऽचेतनः । तेनविष्णोश्चेतनत्वमभावस्याचेतनत्वंचज्ञातव्यं ।**

नभगवतश्चेतनत्वसिद्धिरितिनिरस्तं । उक्तरीत्यातस्ययौगिकत्वात् । एतेनैवच चेतनाचेतनयोर्लक्षणाकथनप्रयुक्तन्यूनतापि निरस्तेतिबोध्यं । चितीसंविज्ञानइत्यस्माण्ण्वुलाद्यौ, "युवोरनाका"वित्यनेनानेच, चेतनेतिभवति । ज्ञातृत्वंचेतनत्वमि त्युक्तंभवति । क्रमप्राप्तमचेतनलक्षणमाह ॥ अनेवंविधइति ॥ अज्ञातेत्यर्थः । यदर्थविग्रहप्रदर्शनंतदाह ॥ तेनेति ॥ विष्णोः भगवतः । चेतनत्वं अजीवत्वेपिज्ञातृत्वं । अभावस्याज्ञातृत्वरूपमचेतनत्वंज्ञेयं । अतोनन्यूनतेतिभावः । चेतन स्यादौनिर्देशेनिमित्तकथनपर "सर्व"मितिवाक्यस्यावतारिकातु भावप्राथम्यहेतुप्रदर्शनपरटीकाफक्किकापातनिकेवबोध्या ।

चेतनार्थं । सर्वस्यापिजडस्यसाक्षात्परंपरयावाचेतनोपभोगसाधनत्वादित्यर्थः । नन्वचेतनोनामपदार्थएवनास्ति । ययाचा पौरुषेयत्वेनानाशंकितदोषलेशयावाचाभवदभिलषितंसाध्यते तत्सजातीयया "मृदब्रवी"दित्यादिकयाश्रुत्या वचनकर्तृत्व रूपचेतनव्यापारोपपादनात्सर्वंचेतनमेवेतिसर्वचैतन्यवादोप्रामाणिकइत्यभिप्रेत्य "मत"इत्यूचेसुचेताइत्याह ॥ मृदब्रवी दित्यादिवचनादिति ॥ नहिवाङ्मात्रेणार्थसिद्धिरित्यतआह ॥ तच्चेति ॥ अभिमानिनयेहि मृदादिशब्दैर्मृदाद्यभिमानि देवतानामेवश्रुतावभिधानान्नसर्वंचेतनमितिमतंसंभवतीत्यानुषंगिकसिद्धांतत्वेन सर्वचेतनत्वमतंनिरस्तमित्यर्थः । अभिमा

सर्वमचेतनंचेतनार्थमितिचेतनस्यप्राधान्यात्पूर्वमुद्देशः । मृदब्रवीदित्यादिवचना

त्सर्वंचेतनमेवेतिमतनिरासाय "मत"इत्युक्तं । तच्चाभिमान्यधिकरणेनिरस्तं ।

न्यधिकरणइत्युपलक्षणं । प्रकृत्यधिकरणेचेत्यपिद्रष्टव्यं । सर्वस्यचेतनत्वपक्षेघटादिरूपचेतनस्यनित्यत्वमुच्यतेऽथानित्यत्वं । नाद्यः । तन्नित्यभावस्यानादितयादंडचक्रादिचक्रवैयर्थ्यापत्तेः । मुद्गराभिघातानंतरंनाशानुभवविरोधाच्च । द्वितीये उक्त रीत्यासादित्वेवक्तव्ये घटादिचेतनंप्रतिकपालादिचेतनमुपादानंवक्तव्यं । विनोपादानंभावसृष्टेःक्वाप्यदृष्टेः । तथाचचेतना नामुपादानोपादेयत्वंसर्वप्रमाणविरुद्धत्वान्नांगीकारार्हमितितदधिकरणानुषंगिकसिद्धांतार्थस्यास्थितत्वादितिभावः । उपपा दितंचैतत्तदधिकरणे "नचोर्णनाभिजनितृमातृणांचविकारिता । चेतनत्वादित्यनुव्याख्यानसुधायांस्वविकल्पितपक्षचतुष्ट

यनिरासकचेतनत्वहेतूपपादनमुखेन । ननु सर्वथाऽवर्जनीयोनित्यानित्यविभागः । सकिमर्थमादौनकृतः । नचानित्यस्या चेतनत्वंनैवंसतिस्यादितितदपाकरणं । हंततर्ह्येवंकरणेचेतनस्यनित्यत्वमपिनस्यादितिसाम्यात् । अतःकेननिमित्तेनैवंविध स्यविभागस्यप्राथम्यमित्याशंक्य रमातत्वादीनांचेतनविभागस्थत्वेनाभ्यर्हितत्वादित्याशयेनाह ॥ चेतनादितिविभाग स्येति ॥ भावाभावविभागादप्यस्यचेतनाचेतनविभागस्यादितःप्रयोज्यत्वप्रयोजकत्वेन तदपेक्षयाचेतनाचेतनविभागप्राथ स्यमेवन्याय्यमितिशंकातु वादिविप्रतिपत्तिभावाभावविशेषादितिवदताऽशेषसंविदाटीकाकृतैवप्राक्प्रकटंपराकृतेतिज्ञेयं ।

**चेतनादिविभागस्यनित्यादिविभागादभ्यर्हितत्वात्सएवादावुदाहृतः । यथोद्देशंचेतनविभागमाह ॥**

**दुःखस्पृष्टंतदस्पृष्टमितिद्वेधैवचेतनं । कदाचिद्दुःखसंबद्धमेवदुःखस्पृष्टं । कदापिदुःखासंबद्धंतदस्पृष्टं ।**

उद्देशक्रमेणचेतनविभागमाहेत्याह ॥ यथोद्देशमिति ॥ ननु मुक्ताः किंदुःखस्पृष्टानवा । नाद्यः । मोक्षस्यसंसारसदृक्षता प्रसंगात् । नांत्यः । उत्तरवाक्यानानुकूल्यापत्तेः । अतःकथमित्यतस्तेष्वपियथानलक्षणस्यातिव्याप्तिःस्यात्तथा किंचित्क दाचिदित्यध्याहृत्य स्पृष्टपदार्थंस्पष्टमाह ॥ कदाचिदिति ॥ तेषामपिपूर्वंदुःखस्पृष्टत्वादव्याप्तिवारणमिवद्वितीयलक्षणाति व्याप्तिवारणंचज्ञेयं । अत्रदुःखपदंतत्वविवेकाद्युक्तदिशासंसृतिपरं । ततोऽव्याप्त्यतिव्याप्त्योरभावइतिमंतव्यं । कश्चिद्दुः खादीनांसर्वेषामाविद्यकत्वेनकल्पितत्वेननकिमपिदुःखस्पृष्टमितिनैवंविभागःसंभवतीतिसमुदाजहार । अवादीदपरोवादी

श्वरातिरिक्तंसर्वंदुःखस्पृष्टमेवेति । तदुभयमपाकर्तुं "मेवे"त्याहेत्याह ॥ कल्पितत्वाद्दुःखादीनामित्यादिना एवकारइ त्यंतेन ॥ यथाश्रुतैवकारान्वयेविशेषणसंगतत्वप्राप्त्याचेतनेतदन्यस्मिन्नचेतनेदुःखस्पृष्टत्वायोगतत्स्पृष्टत्वयोःप्राप्तेरचेतनेत त्स्पृष्टत्वस्यसर्ववाद्यसंमतेःकथमितिचेन्न । व्युत्क्रमेणैवकारान्वयेभवत्येवान्ययोगव्यवच्छेदकइत्युपपत्तेः । ननु रमादुःखास्पृ ष्टेतिवचनं किंतस्याःस्वातंत्र्यमंगीकृत्यनवा । नाद्योनवद्योविष्णुसर्वोत्तमतावादिनां । नांत्यः । परतंत्रत्वदुःखास्पृष्टत्वयोः सामानाधिकरण्यायोगादितिपूर्वपक्ष्याशयः ॥ तदुभयेति ॥ दुःखाद्याविद्यकं सर्वमीश्वरातिरिक्तंदुःखस्पृष्टमित्युभयस्य ।

कल्पितत्वाद्दुःखादीनांनकिंचिद्दुःखस्पृष्टमित्येके । ईश्वरातिरिक्तंसर्वमपिदुःखस्पृष्टमेवे त्यन्ये।तदुभयनिरासायैवकारः।आद्यस्यप्रत्यक्षविरुद्धत्वात्।द्वितीयस्यागमविरुद्धत्वात्।

एवकारः द्विधैवेत्यत्रत्यः । निरासप्रकारंदर्शयति ॥ आद्यस्येति ॥ प्रत्यक्षविरुद्धत्वात् । अहंदुःखीत्याद्यबाधितसाक्षि प्रत्यक्षविरुद्धत्वादित्यर्थः । द्वितीयस्य ईशातिरिक्तस्यसर्वस्यदुःखस्पृष्टत्वमितिनैयायिकमतस्य । समानाचासृत्युपक्रमादसृत त्वंचानुपोष्येत्येतत्सूत्रसंवादि "द्वावावसृत्यनुपक्रमौ । प्रकृतिश्चपरमश्च । जीवाएवतुदुःखिनः । श्रीर्नित्यमुक्ते"त्याद्यागम विरुद्धत्वादित्यर्थः । तर्हिरमारमारमणौविभिन्नावुताभिन्नौ । नाद्यः । भिन्नाचनखिन्नाचेत्स्वतंत्रतत्वद्वैरूप्यंस्यात् । नद्वि तीयः । तथात्वेविभागायोगइत्याशंक्याद्यंपक्षमभ्युपेत्य परमेश्वरस्ययद्दुःखास्पृष्टत्वंतदन्यनिरपेक्षं । रमायास्तुभगवत्तंत्रमि

तिप्रमाणप्रमितत्वान्नोक्तदोषइतिसमाधत्ते ॥ परमेश्वरस्येत्यादिना ॥ स्वातंत्र्येणेतिवदन् "स्वतंत्रोहरिरेकरा"डित्याद्याग मानुगृहीतं हरिर्नदुःखस्पृष्टचेतनः । स्वतंत्रत्वादितिव्यतिरेक्यनुमानंमानमत्रेतिसूचयति । परमेश्वरइतिवदन्नवदंश्रवि ष्णिवति पराचसामाचपरमा तस्याईश्वरःस्वामीपतिर्वा । ततश्चनियतपतिपत्नीभाववतांपत्युरुत्तमत्वमिववध्वाअधम त्वंनियतमितिरमापेक्षयौत्तम्येहेत्वंतरंचोदितंभवतीतिभावमाविश्चकारेतिज्ञेयं । ननु पूर्वमनुपदमेवोदितप्राधान्येन दुःखा स्पृष्टंतत्स्पृष्टमित्येवविभागोन्याय्यः । प्राधान्यंबहुविधं । श्रेष्ठत्वरूपं अभावप्रतियोगित्वेनतन्निरूपकतारूपं उपजीव्यत्व

परमेश्वरस्यदुःखास्पृष्टत्वंस्वातंत्र्येणैवसिद्धं। यद्यप्यनयोर्दुःखास्पृष्टंचेतनंप्रधानं तथाप्यभा
वस्यभावनिरूप्यत्वाद्दुःखस्पृष्टस्यप्रथममुद्देशः। तथापिप्राधान्यक्रमस्यमुख्यत्वात्तदनुसारे
णद्वेअपिनिर्दिशति ॥ नित्यादुःखारमान्येतुस्पृष्टदुःखाःसमस्तशः ॥ अन्ये चेतनाः ।

रूपमित्यादि । तन्मध्येश्रेष्ठत्वंमुख्यं । तथैवोत्तरग्रंथात् । एवंच "दुःखस्पृष्टंतदस्पृष्टमितिद्वेधैवचेतन"मित्यत्र दुःखास्पृष्ट चेतनस्यरमारूपस्यश्रेष्ठत्वात्तस्यैवादौनिर्देशःकार्यः । तत्कथंदुःखस्पृष्टस्यप्रथमंनिर्देशइत्याशंकते ॥ यद्यपीति ॥ प्रधानं श्रेष्ठ रूपं । भावनिरूप्यत्वात् तज्ज्ञानाधीनज्ञानत्वादित्यर्थः । एतदेवात्राचार्याणांप्राधान्यंविवक्षितमित्याशयः । अतएवटी कायांपूर्वं "अभावप्रतीतिर्भावप्रतीत्यधीनानियमेनेतिप्राधान्या"दित्याद्युक्तं। ननु तथापितत्क्रमेणैवशृंगग्राहिकयानिर्देष्टव्यं। तत्कथंवैपरीत्यमित्यतआह ॥ तथापीति ॥ प्राधान्यक्रमस्य श्रेष्ठत्वरूपप्राधान्यक्रमस्य । समस्तशइत्यस्यकृत्यंवक्तुं दूषण

सौकर्यायरामानुजमतमनुवदति ॥ एकेत्विति ॥ व्यष्टयः मुक्ताः । समष्टयः संसारिणः । नहिसमस्तशइत्युक्तिमात्रंदूष णमित्यतआह ॥ अत्रचेति ॥ अत्रच ॥ संकर्षणादीनांनित्यादुःखत्वाभावे, दुःखस्पृष्टत्वेचेत्यर्थः । आगमेत्यादिसामा न्योक्तौ । आगमस्यागमयोरागमानामितिचसंभवविग्रहकत्वेन तावन्मात्रप्रतीतिःस्यात् । अतः सामाहिभूदित्येतदर्थंसमा सतोऽनुक्त्वाऽऽगमानांप्रामाण्यमितिव्यासेननिर्दिदेश । तेच रमेतरविधिशेषाद्यशेषस्यदुःखस्पृष्टत्वे "निर्दुःखोहिहरिर्नित्यं श्रीश्चान्येदुःखभोगिनः । द्वाविमौपुरुषौलोकेक्षरश्चाक्षरएवच । ब्रह्माशिवःसुरेशाद्याःशरीरक्षरणात्क्षराः । लक्ष्मीरक्षरदेहत्वा

एकेतुव्यष्टिसमष्टिभेदेनजीवान्परिकल्प्य गरुडानंतविष्वक्सेनादीन्समष्टिजीवानपिनित्यादुःखानाच क्षते । तन्निरासायसमस्तशइत्युक्तं । अत्रचागमानांप्रामाण्यं । अतएवदुःखास्पृष्टेप्रभेदाभावाद्दुःखस्पृष्टापे क्षयैवधाप्रत्ययःपूर्वोक्तोज्ञातव्यः । अतएवतद्विभागमाह ॥ स्पृष्टदुःखाविमुक्ताश्चदुःखसंस्थाइतिद्विधा ॥

दक्षरात्तत्परोहरिः । ब्रह्मशेषसुपर्णेशशक्रसूर्यगुहादयः । सर्वेक्षराअक्षरातुश्रीरेकातत्परोहरिः । यामारुताद्गर्भमधत्तपूर्वंशेषं सुपर्णंगिरिशंसुरेंद्रं । नित्यादुःखारमास्त्रीषुपुरुषेषुहरिस्तथा । तदन्यच्चेतनंसर्वंदुःखस्पृष्टंनराधिप" इतिपद्मपुराणगीताश्रुति स्कांदपुराणगतभिन्नप्रकरणगतवाक्यद्वयंचेतिक्रमादागमानां प्रामाण्यं प्रमाणत्वं । एतद्रूपप्रमाणान्येतदर्थावेदकानिवर्तंत इतियावत् । दुःखस्पृष्टचेतनस्यावांतरप्रभेदवत्वे, दुःखास्पृष्टस्यचनिर्भेदत्वेबाधकाभावेन "दुःखसंस्थाइतिद्विधे"तिधाप्रत्य योदुःखस्पृष्टमात्रप्रभेदसूचकइत्याह ॥ अतएवेति ॥ दुःखसंस्थाइतिद्विधेत्यत्र पूर्वं "दुःखस्पृष्ट"मित्युक्तत्वेनानुवादेनानु

कृततदाकारेणभवितव्यं । तत्कथं "स्पृष्टदुःखा"इत्यनुवादइत्याशंकायाः आहिताग्न्यादिगणनिवेशनेनास्यविशेषणविशेष्य भावस्यकामगामित्वेनससंभवतीतिसमाधिरवधेयः । यद्वा दुःखस्पृष्टाःस्पृष्टदुःखाइतिनिर्देशवैचित्र्येणेषदनीषद्दुःखतदात्म कत्वादिनाऽधिकारिणांवैचित्र्यमसूचयद्भगवान्भाष्यकृदितिसंतोष्टव्यं विमुक्ताइत्यस्यावधिमाह ॥ दुःखादिति ॥ दुःख पदंचतत्कारणमविद्याद्युपलक्षयत्सुषुप्तव्यावर्तकं । दुःखस्पृष्टाइतिविभागयोग्योक्तिः । तेचविमुक्तादुःखसंस्थाइतिद्विधेत्य न्वयः । दुःखसंस्थाइत्यत्रदुःखेषुसम्यक्तिष्ठंतीतिदुःखसंस्थाइतिविग्रहोनहिसुग्रहः । जीवानामेवदुःखाधिकरणत्वेनदुःखस्य तदधिकरणत्वानौचित्यादित्याशंक्य सम्यक्स्थितिःसंस्था दुःखस्यसंस्थायेषुतेदुःखसंस्थाः । आतश्चोपसर्गइत्यङ् । वर्तमा

विमुक्ताः दुःखात् । दुःखसंस्थाः वर्तमानदुःखाः । चशब्दोदुःखसंस्थाइत्यतःपरंयोज्यः ।

नदुःखाइति । अत्रापिपूर्ववद्दुःखकारणेनसुप्तसंग्रहोपिभवति । वर्तमानदुःखाइत्यत्रशरीरेंद्रियाद्येवदुःखमितिविवक्षितत्वा त्सुप्तादिष्वपितदस्तीतिनाव्याप्तिरितिकेचित् । केचिच्चवर्तमानदुःखपदेनदुःखप्रागभावएवविवक्षितइत्याहुः । यथाश्रुतंच शब्दान्वये दुःखसंस्थाःस्पृष्टदुःखाविमुक्ताश्चेतिद्विधेतिविभागोऽवगतोभवेत् । विमुक्ताश्चदुःखस्पृष्टादुःखसंस्थाइतिवाभवेत् । नचेष्टापत्तिः । पूर्वंदुःखस्पृष्टप्रभेदप्रसक्तिविरोधापत्तेरित्यतोभिन्नक्रमेणचशब्दान्वयमाह ॥ चशब्दइति ॥ ततश्चदुःखस्पृ ष्टाविभागयोग्याः विमुक्तादुःखसंस्थाश्चेतिद्विधेतितद्विभागोक्तिरितिमंतव्यं । इत्यतःपरं एतदुपरिसंबंधनीयइत्यर्थः । ननू त्तरत्र "दुःखसंस्थामुक्तियोग्या"इतिभणनात्तदानुगुण्येनपूर्वमपिस्पृष्टदुःखादुःखसंस्थाविमुक्ताइतिवा । यथापूर्वन्यासं "देव

र्षिपित्रि"तिभेदोवाऽऽदौनिर्देश्यः । कथमनानुगुण्येननिरूपणमित्यतोनिमित्तमाह ॥ अत्रेति ॥ प्राधान्यक्रमेण उत्कृष्टत्वक्रमेण । अयोग्याः पूर्वप्रकृतत्वान्मुक्तेरितिशेषः । दुःखसंस्थाइतिमूले "अयोग्याइतिचद्विधे"तीतिशब्दानंतरंचशब्दः श्रूयते । तत्रैवतस्यान्वये पूर्वंदुःखसंस्थविभागःकथितस्तत्रैवपुनरयमेकोविभागइतिप्रतीतिःस्यात् । नचतद्विभागःकथितइतितस्यविहितस्थलेऽन्वयंदर्शयन्व्याचष्टे ॥ अतःपरश्चशब्दइति ॥ ज्ञातव्यः अयोग्याश्चेत्यनेनयोग्यान्वयोज्ञेयइत्यर्थः ।

अत्रप्राधान्यक्रमेणोद्देशः । दुःखसंस्थानांप्रभेदमाह दुःखसंस्थामुक्तियोग्याअयोग्याइ
तिचद्विधा ॥ अयोग्याः मुक्तेः । अयोग्याइत्यतःपरंचशब्दोज्ञातव्यः । अत्रापितदेवो
द्देशक्रमेनिमित्तं । ननुचप्राधान्याद्विमुक्तभेदःप्रथमंवक्तव्यः । सत्यं । योग्यायोग्यभे
दस्यदुःखसंस्थेष्वेवभावात्तदभिधानानंतरंमुक्तियोग्यभेदकथनस्यसौकर्यात्क्रमोल्लंघनं ।

मुक्तियोग्याअयोग्याइत्येवंनिर्देशेपूर्वोक्तंनिमित्तंस्मारयति ॥ अत्रापीति ॥ तदेव प्राधान्यमेवयदिप्रधानत्वंप्राथम्येनिमित्तंतर्हिविमुक्तभेदआदावावेदनीयः । सकुतोनावेदितोत्रेतिशंकते ॥ नन्विति ॥ अर्धांगीकारेणपरिहरति ॥ सत्यमिति ॥ तथापीत्यध्याहारः । योग्यायोग्यभेदस्य मुक्तियोग्यतदयोग्यविभागस्य । दुःखसंस्थप्रभेदत्वेन तदभिधानानंतरं दुःखसंस्थविभागाभिधानानंतरंमुक्तियोग्यविभागकथनंसुशकमितिसौकर्यार्थंप्राधान्यक्रमोल्लंघनं । अन्यथाचैवमित्यतिदेशायो

गोगौरवंचस्यादितिभावः । क्रमप्राप्तत्वेनमुक्तियोग्यविभागएवोच्यतइतिवारयितुमवतारयति ॥ इदानीमिति ॥ दुःखसंस्थविभागानंतरं । मूले देवर्षिपितृपनराः देवाश्च ऋषयश्च पितरश्च पांतीतिपाश्चक्रवर्तिनश्च नरामनुष्योत्तमाश्च तेतथा । अभ्यर्हितत्वाद्देवशब्दस्यादौनिर्देशः । नचपांतीतिपाश्चक्रवर्तिनइतिनभवेत् । आतोनुपसर्गेकइत्यनुपसर्गेकर्मण्युपपदेसत्याकारांताद्धातोःकप्रत्ययविधानात् । प्रकृतउपपदस्याभावान्नकप्रत्ययसंभवइतिवाच्यं । आतइतियोगविभागाद्वा मूलविभुजादित्वांगीकारेणकप्रत्ययेवा "अन्येभ्योपिदृश्यत" इतिडप्रत्ययेवा रूपस्यसूपपादत्वात् । पःपातरिसमीरेकें पःपुमान्पवनेपातरीतिपैकविश्वैकाक्षरनिघंटू । पांतिरक्षयंतिप्रजाइतिपाश्चक्रवर्तिनःपृथ्वाद्याः । देवादिसाहचर्यान्नायंमनुष्यसामान्यवाची

इदानींमुक्तानांप्रभेदमाह॥देवर्षिपितृपनराइतिमुक्तास्तुपंचधा॥पांतीतिपाश्चक्रवर्तिनः।

नरामनुष्योत्तमाः । तुशब्दोऽवधारणे । तेनयेमोक्षेतारतम्यंनमन्यंतेतन्मतंनिराचष्टे ।

नरशब्दः किंतुतद्विशेषपरइतिव्याख्याति ॥ मनुष्योत्तमाइति ॥ शर्मणानृपत्नीरितिऋग्भाष्यव्याख्यायां "नरोदेवाः । प्रधानपुरुषत्वा" दितिदेवग्रहणवन्मुख्यनयेनमनुष्योत्तमग्रहणंज्ञेयं ॥ तुशब्दइति ॥ अवधारणे अवधारणरूपार्थेवर्ततइत्यर्थः । तुशब्दस्तुविशेषेस्यात्स्वसिद्धांतेऽवधारणइत्यभिधानात् । अवधारणइत्यनंतरं सचपंचधेत्यनेनान्वेतीतिशेषः । अवधारणार्थकत्वेलब्धमर्थमाह ॥ तेनेति ॥ अवधारणार्थकतुशब्दस्यपंचधेत्यनेनान्वयकरणेनेत्यर्थः । परमंसाम्यमुपैतीत्यादिश्रुतीनामन्यार्थकत्वस्यस्थितत्वादितिभावः । संसारदशायांतारतम्योपेतेब्रह्मादौप्रसिद्धदेवर्ष्यादिशब्दैरेवोद्देशात्तारतम्यमु

क्तप्रायमितिभावः । ननु “क्षितिपामनुष्यगंधर्वा देवाश्चपितरश्चिराः । आजानजाःकर्मजाश्च देवाइंद्रःपुरंदरः । रुद्रःसर
स्वतीवायुर्मुक्ताःशतगुणोत्तराः । नृपाद्याःशतधृत्यंता मुक्तिगाउत्तरोत्तरं । गुणैःसर्वैःशतगुणामोदंतइतिग्रंथांतरेगंधर्वादी
नामधिकानामपिश्रवणात्तद्विरोधइत्यतआह ॥ गंधर्वेत्यादिना ॥ एष्वेवान्तर्भावादिति । अत्रदेवपदेनतात्विकानामिवकर्म
जाजानजानामपिदेवानांग्रहणात् । तुंबुरुप्रमुखशतगंधर्वाणामुर्वश्याद्यप्सरसांचाजानदेवेष्वंतर्भावः । तुंबुरुप्रमुखायेचत
थोर्वश्यादिकाअपि । आजानदेवास्तेप्रोक्ताइत्युक्तेः । तुंबुरुप्रमुखेभ्योऽधिकाष्टगंधर्वाणांतुकर्मजदेवेष्वंतर्भावः । कर्मदेवग

गंधर्वादीनांकेषांचिदेष्वेवांतर्भावात्केषांचिदविवक्षितत्वान्नग्रंथांतरविरोधः ।
दुःखसंस्थामुक्तियोग्यायोग्यभेदाद्विधाइत्युक्तं । तत्रमुक्तप्रभेदंयोग्येष्वभिदि
शति ॥ एवंविमुक्तियोग्याश्च॥ देवर्ष्यादिभेदेनपंचधेत्यस्यानुकर्षणार्थश्चकारः।

णाअष्टगंधर्वास्तत्परेशतमित्याद्युक्तेः । तदन्येषांगंधर्वाणांचात्रविवक्षाभावेनग्रंथांतरविरोधाभावादित्यर्थः । यद्वा भागवता
दौपूतनाकंसनरकशिशुपालादीनांमुक्तत्वप्रतिपादनात्तेषामत्राकथनात्कथंनतद्विरोधइत्यतआह ॥ केषांचिदविवक्षितत्वा
दिति ॥ पूतनादीनांमुक्तत्वेनेदानीमविवक्षितत्वादित्यर्थः ॥ इत्युक्तमिति ॥ दुःखसंस्थामुक्तियोग्याअयोग्याइत्यादिना ।
मुक्तप्रभेदं देवर्षीत्यादिरूपं । योग्येषु मुक्तियोग्येषु । चशब्दकृत्यमाह ॥ देवर्ष्यादीति ॥ अनुकर्षणार्थः । बहुव्रीहिः ।

क्रमप्राप्तमयोग्यविभागमाहेत्याह ॥ मुक्त्ययोग्येति ॥ तमोगाइत्येतदर्हार्थकबाहुलकडांतमित्यभिप्रेत्याह ॥ तमोगास्तमो योग्याइति ॥ कर्तरिडांतोयंशब्दः किंनस्यादित्यतोविपक्षेबाधकमुपदर्शयंस्तन्निषेधति ॥ नत्विति ॥ प्राप्ततमसः प्राप्तंतमो यैस्ते ॥ वक्ष्यमाणेति ॥ तेचप्राप्तांधतमसःसृतिसंस्थाइतिद्विधेतिवक्ष्यमाणविरोधादित्यर्थः । तत्रसृतिसंस्थानांतत्प्रभेदत्वो क्तेरितिभावः । नित्यसंसारिणः मिश्रसुखदुःखात्मकफलकमिश्रज्ञानाः । विस्तरस्तु नित्यसंसारिलिंगभंगविषयेनित्योपलब्धि

मुक्त्ययोग्यविभागमाह ॥ तमोगाःसृतिसंस्थिताः । इतिद्विधाऽमुक्त्ययोग्याः ॥
तमोगाः तमोयोग्याः । नतुप्राप्ततमसः । वक्ष्यमाणविभागविरोधात् । सृतिसं
स्थिताः नित्यसंसारिणः । अयोग्यतातिशयानुसारेणोद्देशः । तमोयोग्यानांप्रभे
दमाह ॥ दैत्यरक्षःपिशाचकाः ॥ मर्त्याधमाश्चतुर्धैवतमोयोग्याःप्रकीर्तिताः ॥

सूत्रभाष्यटीकाटिप्पणीभ्यः, तथा "नित्योपलब्धिसूत्राच्चभाषणाट्टीकणादपि । नित्यसंसारिणांलिंगभंगोस्तीतिसतांमत" मित्यादिवदद्भिःश्रीमत्सत्यप्रियश्रीपादश्रीवादिराजश्रीपादादिभिःकृतग्रंथेभ्यः, तथा अस्मत्कृतनमकचमकव्याख्यानतोऽ वगंतव्यः । अत्रापिपूर्वोद्देशेऽतिशयितमिथ्याज्ञानित्वलक्षणप्राधान्यमेवनिमित्तमित्याह ॥ अयोग्यतेति ॥ सृतिसंस्थापेक्ष येतिशेषः । यथाश्रुतग्रंथेमर्त्याधमानांचातुर्विध्यंप्रतीयते । नचेष्टंतत् । उत्तरत्रतद्विभागाकथनात् । दैत्यरक्षःपिशाचकाइत्या

दीनामन्वयाभावाच्चेत्यतोपेक्षितंपूरयति ॥ मर्त्याधमाइति ॥ इतिशब्दइति । इतीतिशब्दइतिशब्दः । तस्यचमर्त्याधमाइत्यनेनान्वयोभवतीतिमर्त्याधमचतुष्कभ्रमभ्रंशइतिज्ञेयं । एवकारव्यावर्त्यमाह ॥ अप्रसिद्धत्वादिति ॥ ईषत्प्रसिद्धत्वादित्यर्थः । नञभावेनिषेधेचस्वरूपार्थेप्यतिक्रमे । ईषदर्थेचसादृश्येतद्विरुद्धतदन्ययोरितिविश्वः । तदन्यत्वंतदल्पतेत्यादिश्च । प्रयोगास्तु "गंगामतोयां अनुदराकन्ये"त्यादयोज्ञेयाः । यद्वा "अप्रसिद्धत्वादस्ये"त्यस्यशंकाग्रंथत्वात्सामान्यतःप्रसिद्ध्याक्षेपोबोध्यः । कथमेवशब्देनतद्वारणमित्यतोस्यागमप्रसिद्धत्वादित्याहेत्याह ॥ प्रकीर्तिताइत्यनेनेति ॥ संमतिं संवादं ।

मर्त्याधमाइत्यतःपरमितिशब्दोऽध्याहार्यः । अप्रसिद्धत्वादस्यभेदस्याश्रद्धेयत्वंनिवारयितुमेवशब्दः । प्रकीर्तिताइति अत्रागमसंमतिमाचष्टे । सचान्यत्रोदाहृतोद्रष्टव्यः । चतुर्विधाअप्येतेप्रत्येकंद्विधाइत्याह ॥ तेचप्राप्तांधतमसःसृतिसंस्थाइतिद्विधा ॥

तर्हिसकिंनोदाहृतइत्यतोन्यत्रोक्तत्वादत्रपुनस्तद्वचनेगौरवंस्यादित्युपरम्यतइत्याह ॥ सचेति ॥ सचेतितच्छब्देन "आगमसंमति"मित्यत्रसमासेगुणभूतमागमंपरामृशति । सात्विकाइत्याद्यारभ्य "मर्त्याधमास्तामसास्तुदैत्यरक्षःपिशाचकाः । स्वरूपभूतविद्वेषाद्धरौगच्छंतितेतम"इत्यादिबृहत्संहितारूपोन्यत्रबृहद्भाष्यादावाचार्योदाहृतोद्रष्टव्यः । तामसास्तुमर्त्याधमादैत्यरक्षःपिशाचकाइतिसंमतिप्रमाणेऽन्वयः । एते दैत्यादयः । दैत्याद्याःप्रत्येकंप्राप्तांधतमसःसृतिसंस्थाइतिद्विधाज्ञेयाइत्यर्थः ।

अवसमंधेभ्यस्तमसइत्यजंतस्याकारांतत्वस्य "ध्वांतेगाढेऽधतमसं"इत्यमरादौस्थितत्वात् "प्राप्ताधतमसा"इतिवक्तव्येकथंवि परीतोक्तिरितिचेन्न । जानंतिपूर्वराजानः रथ्याद्भिर्लभ्यते ऋक्पूरब्धूःपथामानक्षे इत्यादिनिर्देशात्, अश्वादिगणेराजञ्श ब्दस्यग्रहणेनच समासांतविधेरनित्यत्वावेदनात्प्रकृतेपिसमासांताजभावोपपत्तेः । यद्वा "प्राप्तांधतमस"इतिप्रथमैकवचनमेव । तमःप्राप्तानामेकसमुदायत्वेन, सृतिसंस्थानांचबहुत्वेनविवक्षितत्वेन "तेचप्राप्तांधतमसःसृतिसंस्थाइतिद्विधे"त्येकबहुवचनां तत्वेनप्रयोगोपपत्तेः । एवंचोक्तसूत्रेणभवत्येवसमासांतोच्प्रत्ययइति । ननु मूलेद्विधेतिधाप्रत्ययार्थस्यतच्छब्दार्थेनकथम न्वयः । संख्यायाविधार्थेधेतिसूत्रंसंख्यावाचकाद्विधाशब्दस्ययोर्थःप्रकारस्तस्मिन्नर्थेधाप्रत्ययोभवतीतितदर्थः । एवंचद्विधाश

तेचचतुर्विधाअपि।सृतिसंस्थाः संसारेवर्तमानाः ।

ब्दार्थस्यप्रकारद्वयस्यतच्छब्दार्थीभूतदैत्यादिभिस्तादात्म्याभावात्कथमेतदितिचेन्न । प्रकारवाचकस्यलक्षणयाप्रकारवद्बोधक त्वसंभवात् । यद्वा तेचप्राप्तांधतमसःसृतिसंस्थाइत्येवंरूपेण द्विधा प्रकारद्वयेन ज्ञेयाः इत्यध्याहारेणयोजना । उक्तंच "सं ख्यायाविधार्थेधे"तिसूत्रव्याख्यावसरेतत्वसुबोधिन्यां "कथंनवद्रव्यंबहुधागुणइत्यादि । अत्राप्यश्रुतापिक्रियाप्रतीयतेऽप दिश्यतइतिवाभवतीतिवेतिहरदत्त"इति । अथवा द्विधाशब्दोत्तरविद्यमानतृतीयायावैशिष्ट्यमर्थः । एवंच इत्येवंप्रकारद्वय विशिष्टादैत्यादयइति । एवमेवसर्वत्रधांतस्थलेज्ञेयं । सृतिसंस्थाइत्यस्यनित्यसंसारिभ्रमंवारयति ॥ संसारेवर्तमानाइति ॥

ननु तमःपतितानामेवप्राप्तांधतमसत्वात्कथंतद्योग्यविभागयोग्यतातेषामित्यतआह ॥ नाधुनेति ॥ चैतन्यस्वभावत्वेनेति ॥ स्वभावाख्यायोग्यतायाहठाख्येतिद्वाविंशाध्यायश्रीमन्महाभारततात्पर्यनिर्णयोक्तेरितिभावः । उत्तरमूलमवतारयति ॥ एवमिति ॥ विस्तरेण शब्दप्रपंचेन ॥ अवसरप्राप्तमिति ॥ चेतनविभागानंतरमचेतनविभागस्यन्थायप्राप्तत्वादित्यर्थः । ननु विष्णोर्नित्यत्वस्यावश्यंवक्तव्यस्यानुक्तेर्न्यूनतास्याद्ग्रंथस्य । नचानेनैवमूलेनतस्यतत्सेत्स्यतीति

नाधुनापितमःप्राप्ताः । योग्यतायाश्चैतन्यस्वभावत्वेनतमोयोग्यानामयंविभा
गोनानुपपन्नः । एवंचेतनविभागंविस्तरेणाभिधायावसरप्राप्तमचेतनविभाग
माह ॥ नित्यानित्यविभागेनत्रिधैवाचेतनंमतं ॥ अत्राप्यचेतनमेवैवंविभागव
दित्यर्थानभ्युपगमात्पूर्वोक्ततत्वानामपिप्रमाणांतरेणनित्यत्वादिग्रहणंनविरुद्धं ।

वाच्यं । अस्यास्वतंत्रप्रभेदत्वात् । एवमेवचेतनानांरमादीनामचेतनप्रभेदनित्यत्वालाभाच्चेत्यतो "भावाभावौद्विधेतर" दित्यादिमूलवाक्यानामन्यनिषेधकत्वाभावेनयथातेभ्योविष्णोर्भावत्वादिसिद्धिः तथाऽस्मादपिविष्ण्वादीनांनित्यत्वंसंभवत्येवेत्याह ॥ अत्रापीति ॥ नकेवलं "भावाभावा"वित्यादिषु । किंत्वत्रापीत्यर्थः । अतएवभगवत्पादैरवधारणमचेतनएतत्प्रकारत्रयंक्वचिदपिनवियुज्यतइतिप्रदर्शनार्थंत्रिधेत्यनेनोपनिबद्धं ॥ एवंविभागवदिति ॥ एवकारस्याचेतनपदेनान्वयमं

गीकृत्यैवंविभागवदित्यर्थानंगीकारादित्यर्थः । पूर्वोक्ततत्वानां विष्ण्वादीनां । प्रमाणांतरेण "नित्योनित्यानां जीवोनित्यो धातुरस्यत्वनित्य" इत्यादिप्रमाणविशेषेण । आदिपदेनाभावप्रभेदप्रागभावस्यानित्यत्वंग्राह्यं । ननु "नित्यानित्यविभागेने" तिमूलेद्वैविध्यस्यैवप्रतीतेस्त्रिधेतिकथनंकथंनविरुद्धमित्यतो नात्रनित्यमनित्यंचेतिविभागेनेत्यर्थोऽभ्युपगम्यते येनविरोधः । किंतुनित्यंचतदनित्यंचेतिनित्यानित्यं । नित्यानित्यंचविभागश्चनित्यानित्यविभागः । सर्वोद्वंद्वोविभाषयैकवद्भवतीत्येकवद्भावः । नित्यानित्येत्येतच्चभावप्रधानं । विभागशब्दस्यचसंबंधिशब्दत्वात्तदाकांक्षापूरकत्वेननित्येत्यादि । तेनाप्यन्वेतीती

नित्यानित्यविभागेनेत्यस्यनित्यानित्यत्वेनतद्विभागेनचेत्यर्थः । तथाचनित्यानि
त्यंनित्यमनित्यंचेत्यचेतनंत्रिविधमित्युक्तंभवति । केचित्सर्वंक्षणिकंमन्यमाना
नित्यंनमन्यंते । अपरेतुसत्कार्यवादिनोऽनित्यंनांगीकुर्वंति । सर्वेपिनित्यानित्यं

ममर्थसंदर्भंमनसिनिधायाह ॥ नित्यानित्येति ॥ तद्विभागेनेति ॥ नित्यत्वेनानित्यत्वेनचेत्येवंतस्यसमस्तस्यभावप्रधानतयाविभागोनेत्यर्थः । एवंवाक्यार्थोपयुक्तंपदार्थमुक्त्वावाक्यार्थमाह ॥ तथाचेति ॥ इत्युक्तंभवति अनेनमूलेनेतियोज्यं । सर्वमचेतनमुक्तरीत्यात्रिविधमेव । नतुसर्वंनित्यं । नाप्यनित्यमित्ययोगव्यवच्छेदार्थकैवकारव्यावर्त्यमतानिदर्शयति ॥ केचिदित्यादिना ॥ केचित् वैनाशिकाः । अपरे सांख्याः । मृदादौपृथुबुध्नोदराद्याकारोघटादिःपूर्वमत्यंतंसन्नेवदृश्यतइतिवदं

तोऽनित्यंनानाभ्युपगच्छंतीत्यर्थः ॥ विरोधादिति ॥ सहानवस्थितिरूपात् । यत्रनित्यत्वंगमनादौ नतत्रानित्यत्वं । यत्र चघटादावनित्यत्वं नतत्रनित्यत्वमिति तदुभयोरेकत्रानवस्थानादित्यर्थः ॥ तन्निरासायेति ॥ अनूदितमतनिरासार्थमि त्यर्थः । एवकारः त्रिधैवेत्यत्रत्यः । एवकारेणकथंतन्निरासइत्याशंक्यसमाधत्ते ॥ नेति ॥ प्रतिज्ञामात्रेणेति । त्रिधैवेतिप्र तिज्ञामात्रेणेत्यर्थः । इति इत्यतः । उक्तविभागस्य नित्यानित्यविभागेनेत्युक्तविभागस्य । तच्च प्रामाणिकत्वं । लेशतः लेशेन। सार्वविभक्तिकत्वात्तसेःप्रकृतेतृतीयांतात्तसिरितिभावः दर्शयिष्यामः नित्यावेदाःपुराणाद्याइत्येतद्व्याख्यावसरइत्यर्थः ।

**विरोधान्नाभ्युपगच्छंति । तन्निरासायैवकारः । नप्रतिज्ञामात्रेणार्थसिद्धिरितिप्रामाणिकत्वमुक्तविभाग स्यसूचयति ॥ मतमिति ॥ तच्चलेशतोदर्शयिष्यामः । यद्यपिनित्यंनित्यानित्यमनित्यमित्युद्देशःकार्यः । प्राधान्यात् । तथाप्युक्तिलाघवायक्रमोल्लंघनं । क्रमेणत्रयंदर्शयिष्यन्नित्यंतावद्दर्शयति ॥ नित्यावेदाः ॥**

ननु आदौनित्यं तदनंतरंनित्यानित्यं ततस्त्वनित्यमित्युद्देशःकार्यः । प्राधान्याप्राधान्यक्रमस्यसत्त्वात् । तथैवोत्तरत्रनि र्देशस्यकरिष्यमाणत्वादित्याशंकते ॥ यद्यपीति ॥ प्राधान्यात् प्राधान्यक्रमात् । परिहरति ॥ तथापीति ॥ उक्तिलाघ वाय उक्तौयल्लाघवं लघुत्वं तस्माइत्यर्थः । क्रमोल्लंघनं पूर्वंनित्यमनुद्दिश्यनित्यानित्यस्यप्रथमतःकथनरूपमतिक्रमणं । तर्ह्येतदनुसारेणनित्यानित्यस्वरूपनिरूपणंप्राक्कार्यं । नित्यस्वरूपनिरूपणंतुकुतइत्यतआह ॥ क्रमेणेति ॥ प्राधान्यक्रमेणे

त्यर्थः । त्रयं नित्यंनित्यानित्यमनित्यमितित्रयं । ननु "नित्यावेदा"इत्यत्रनित्यत्वंनामयद्यविनाशित्वं तर्हिंनित्यानित्यपुराणादीनांनित्यत्वस्यापिसत्वात्तत्रातिव्याप्तिः । नचतेषांलक्ष्यत्वान्नानुपपत्तिरितिवाच्यं । नित्यरूपप्रथमप्रकाराक्रांतत्वे "पुराणाद्या"इति द्वितीयप्रकारविशिष्टत्वेनकथनविरोधापत्तेरित्यतआह ॥ अत्रेति ॥ अस्मिन्वाक्येवेदानामुक्तंनित्यत्वंनाम कूटस्थतया निर्विकारतया । आद्यंतशून्यत्वं उत्पत्तिनाशरहितत्वं । कूटवत्तिष्ठतीतिकूटस्थं । कूटंखंविदलंव्योमेत्याद्यभिधानादाकाशवाचिकूटशब्दउपपदेतिष्ठतेः "सुपिस्थ"इत्यतोयोगविभागात्कप्रत्ययेरूपं । आकाशवत्स्थित्युक्त्यानिर्विकारत्वं

अत्रनित्यत्वंनामकूटस्थतयाऽऽद्यंतशून्यत्वं । तच्चवेदानां "नित्यावेदाःसमस्ताश्चे"त्यादिप्रमाणसिद्धं ।

लभ्यते । एवंचोक्तस्थलेनातिव्याप्तिः । पुराणादीनामनीदृशत्वात् । एतेनैवोक्तविरोधोपिनिरस्तइतिज्ञेयं । ध्वंसप्रागभावयोरनतिव्याप्तयेआद्यंतशून्यत्वमितिक्रमाद्विशेषणे । तावत्युक्तेकालप्रवाहेप्रकृत्यांचातिप्रसक्तिः । तत्परिहारायकूटस्थतयेतिपदं । एवंच कालप्रवाहप्रकृत्योः क्षणलवाद्यंशैर्महदाद्यात्मनाविकारदर्शनात्सदैकप्रकारत्वरूपकूटस्थत्वाभावान्नदोषः । असंभवशंकांवारयति ॥ तच्चेति ॥ कूटस्थतयाऽऽद्यंतशून्यत्वं । आदिपदेन "शाश्वताविष्णुबुद्धिगाः । सर्गसर्गेऽमुनैवैतउद्गीर्यंतेतथैवच । अनादिनिधनानित्यावागुत्सृष्टास्वयंभुवा । अनादिनित्यासातच्चविनातांनसगम्यत"इत्यादीनांसंग्रहः ।

ननु नित्यानांवर्णाव्याकृताकाशादीनांसत्त्वात्कथंवेदमात्रग्रहणमित्यतआह ॥ अत्रेति ॥ अजहत्स्वार्थलक्षणारूपमित्यर्थः । ततश्चनानुक्तिदोषः । भूतव्यावृत्तयेऽव्याकृतपदं । तथाभावादित्यनेनोपलक्षणाकरणेऽतिव्याप्तिःस्यात्तत्रेतिसूचयति । नच "नहिवयंवेदस्यकूटस्थनित्यतांब्रूमः । किंतुशब्दतोर्थतश्चैकप्रकारतामेवे"त्यादितत्वनिर्णयटीकाविरोधइतिवाच्यं । क्रमस्तु द्विविधः । ईशबुद्धिस्थोस्मद्बुद्धिस्थश्चेति । तत्राद्यमवलंब्येयंटीकाप्रवृत्ता । ईश्वरबुद्धेरुपरमाभावेनतदुपहितक्रमस्यापिनित्यत्वेनोक्तलक्षणसंभवात् । द्वितीयमवलंब्यतुतत्वनिर्णयटीकाप्रवृत्ता । अस्मद्बुद्धीनांक्रमवत्त्वात्तदुपहितक्रमविशिष्टवर्णात्मकवेदस्यापितथोक्तिसंभवात् । एवमेवनित्यत्वानित्यत्वावेदकप्रमाणान्यप्युभयथायोज्यानीत्यविरोधसंभवात् । यथोक्तं

अत्रवेदाइत्युपलक्षणं । पंचाशद्वर्णानामव्याकृताकाशस्यचतथाभावात् ।

गायत्र्यधिकरणचंद्रिकायां "गायत्रीरूपवेदस्यानादिनित्यत्वात्" । ननुकृतकक्रमविशिष्टवर्णात्मकस्यवेदस्यनानादित्वं । उक्तं हितत्वनिर्णयटीकायां । नहिवयंवेदस्यकूटस्थनित्यतांब्रूमइति । क्रमस्यकृतकत्वेपीतिचेतिचेन्मैवं । तत्वसंख्यानटीकायां नित्यत्वंनामकूटस्थतयाद्यंतशून्यत्वं । तच्चवेदानां नित्यावेदाःसमस्ताश्चेत्यादिप्रमाणसिद्धमित्युक्तत्वात् । युक्तंचैतत् । क्रमस्यसदेश्वरबुद्धिस्थत्वात् । अतएवोक्तंतत्वनिर्णये सर्वज्ञत्वादीश्वरस्यतद्बुद्धौसर्वदाप्रतीयमानत्वादिति । तट्टीकायांकौटस्थ्यनिषेधस्त्वस्मदादीन्प्रतिप्रमापकत्वोपयुक्तस्यास्मदादिबुद्धिस्थस्यक्रमस्योच्चारणाद्यधीनत्वेनकृतकत्वात् । कृत्वाचिंतया

वाऽनादित्वोक्तिः । क्रमस्यानन्याधीनत्वात् । इयंच नित्यत्वादेवशब्दानांतत्स्वभावःकथंहरेरित्यनुव्याख्यानेप्रदर्शिते"ति । तर्कतांडवेपौरुषेयत्वानुमानभंगे "ननुकथंवेदस्यापौरुषेयत्व"मित्यारभ्य "नचेश्वरस्यतथाविधबुद्ध्युपरमोयुज्यते । तस्यस र्वदासर्वज्ञत्वात् । पुराणादीनामप्यन्यथारचनमेवानित्यत्व"मित्यंतेनायमर्थएवोक्तः । सत्तत्वरत्नमालायामचेतनप्रकरणे "नित्यावेदास्तथाकाशोदिङ्मामापियएवहि । वेदःसर्वोपिनित्यश्चस्वरक्रमपदात्मकः । पंचाशत्संख्यवर्णानांक्रमाद्योगैःपरस्परं । अनंतानांचवेदानांस्थितिरित्यतिकौतुकं । ईश्वराचिंत्यशक्त्यैवघटनाकेवलंभवे"दित्यारभ्य "व्यक्तिरुच्चारणाद्भवेत् । नित्या अनित्याश्चततस्तदधीनाःसदैवही"त्यंतेनसव्याख्यानेननिपुणतरमयमेवार्थःप्रपंचितः । तथाहितद्वाक्यानिगीताभाष्ये"तदु त्पत्तिवचनान्यभिव्यक्त्यर्थानीत्यादौ । तदुत्पत्तिवचश्चैवभवेद्व्यक्तिमपेक्ष्यत्विवितितत्वनिर्णये । तत्वसंख्यानटीकादौतुकौट स्थ्यस्यस्पष्टमुक्तत्वाच्च । कौटस्थ्याभाववचनंत्वभ्युपगमवादेनवाव्यक्तिलक्षणविशेषाभिप्रायेणवासावकाशं । अन्यथाशब्द तोर्थतश्चैकप्रकारतामेवेतितदुत्तरग्रंथेशब्दतएकप्रकारत्वाख्यकूटस्थत्वोक्तिविरोधं वियदधिकरणीयसुधायां वेदस्यनियता नुपूर्वीकत्वेनार्थावबोधनंशक्त्याविर्भावोव्यक्तिरित्युक्तेस्तद्विरोधाच्चेतितद्विरोधमुक्त्वा नचेत्यादिनापुनःशंकाःप्रापय्य तन्नि षेधपूर्वकं तदेवेदंवचनमित्यादिविरोधादितियद्वर्णक्रमाद्युपेतमेवेदंश्रूयमाणंवाक्यमितिप्रत्यभिज्ञानादित्युक्तेरिति । तथाद्वा दशस्तोत्रेपि वैकुंठस्याखिलावेदाउद्गीर्यंतेऽनिशंयतइत्युक्तेश्चेति । तत्वनिर्णयटीकान्यायावल्यांच । नित्यमपिप्रधानंविक्रि यते । नतथाविकारिणोवेदाइतिदर्शयितुंशाश्वताइतिशाश्वतपदकृत्यमभिधाय तथैवतद्विक्रियते तत्क्रमेणैवतैर्वर्णैस्तैःस्वरै

रेवनान्यथेति येपूर्वकल्पेवेदाःस्थिताः येचसंहितापदादिषूदात्तादिस्वराःस्थिताः येचतत्रवर्णाःस्थिताः यश्चतत्रक्रमः स्थितस्तएवैतत्कल्पादौविष्णुनोदीर्यंते । नतुवह्निमीळइतिवर्णविपर्ययेण । नचपुरोहितमीळइतिक्रमविपर्ययेणेत्युक्तंभवतीत्यारभ्य यथावेदजनिवचनस्यार्थोवेदाभिव्यक्तिरित्यंतेननिपुणतरमयमेवप्रकारउदंचितः । यद्वा जहत्स्वार्थलक्षणयाक्रमविशिष्टवेदंपरित्यज्यपंचाशद्वर्णाव्याकृताकाशाएवग्राह्याः । उपलक्षणशब्दस्तु "उपलक्षणाचगौणीचतिस्रश्शब्दस्यवृत्तय"इत्यनुव्याख्यानोक्तेर्लक्षणासामान्यपरः । ईशशेमुषीजातोपिक्रमस्तद्बुद्ध्युपरमाभावेनैवननश्यतीतिचोपपद्यते । उपपद्यतेच "तत्क्रमेणे"त्यादितन्नित्यतावेदकोवेदवादः । पुराणस्यवेदस्यचोपपद्यतउत्पत्तिमत्क्रमकत्वेपिविलक्षणानुपूर्वीकत्वतदभावरूपवैलक्षण्यं । स्पष्टंचात्र "नहिवय"मित्याद्यनेकस्थलगतटीकाकृद्वाक्यमिति । तथाचोक्तमेतद्व्याख्यानेपांडुरंगीये "ननुक्रमविशिष्टवर्णाएववेदाः । नाव्याकृताकाशवदर्थांतरं । वर्णाश्चनित्यत्वात्सर्वगतत्वाच्चस्वतःक्रमशून्याइत्यतःक्रमोबुद्धिनिमित्तएवास्थेयः । उक्तंहि "वर्णानांदेवतानांचनित्यत्वान्नक्रमःस्वतः । व्यक्तिक्रमंब्रह्मबुद्धावपेक्ष्यक्रमउच्यत" इति । तत्कथंकृतकक्रमविशिष्टवर्णात्मकस्यनित्यत्वमुच्यते । अतएवोक्तंतत्वनिर्णयटीकायां "नहिवयंवेदस्यकूटस्थनित्यतांब्रूम"इति । "क्रमस्यकृतकत्वेपी"तिच । तत्कथमेतदितिचेत् । अत्रवदंति । एतट्टीकानुरोधेन "नहिवयंवेदस्ये"त्यादितत्वनिर्णयटीकाग्रंथोव्याख्येयः । अत्र "नित्यावेदा"इतिप्रमाणोपन्यासेनैतद्ग्रंथस्यप्राबल्यात् । युक्तंचैतत् । क्रमस्यसदेश्वरबुद्धिस्थत्वात् । अतएवोक्तंतत्वनिर्णये "सर्वज्ञत्वादीश्वरस्यतद्बुद्धौसर्वदाप्रतीयमानत्वा"दिति । नचैवंटीकायांतन्निषेधानुपपत्तिः ।

अस्मदादीन्प्रत्यस्मदादिबुद्धिस्थस्यक्रमस्योच्चारणाद्यधीनत्वेनकृतकत्वादित्यभिप्रायेणतस्योपपन्नत्वादिति । वयंतुब्रूमः । नक्रमस्यानादिनित्यत्वमंगीकारार्हं । तथासतिवर्णधर्मस्यक्रमस्ययावद्द्रव्यभावित्वेनवर्णयोरत्यंताभेदप्रसंगेनवर्णानांपरस्परमत्यंताभेदप्रसंगात् । अतएवचंद्रिकायामिमामेवानुपपत्तिंमनसिनिधाय "कृत्वाचिंतयावानादित्वोक्ति"रित्युक्तं । ततश्चकृतकक्रमविशिष्टवर्णात्मकस्यवेदस्यनित्यत्वासंभवात्कथंतन्नित्यत्वोक्तिः । कथंवाकृतकस्यकूटस्थतयाप्रमितत्वं । नित्यानित्यादिभावेननिर्दिष्टस्यनित्यत्वेननिर्देशइत्यतआह । अत्रवेदाइत्युपलक्षणमिति । अत्रोपलक्षणपदेनलक्षणासामान्यमित्युच्यते । नत्वजहत्स्वार्थलक्षणा । उपलक्षणाचगौणीचतिस्रःशब्दस्यवृत्तयइत्यादौलक्षणासामान्येपितत्प्रयोगदर्शनात् । तथाचवर्णानामव्याकृतस्यैवकूटस्थनित्यत्वेनाभिप्रेतत्वान्नसंग्राह्यासंग्रहोसंग्राह्यसंग्रहोपीतिभावः । यत्तु चतुर्वेदानामेवश्रुतिगृहीतत्वेननित्यत्वेनप्रदर्शनमनुपपन्नं । अव्याकृतादेश्चतथाभूतत्वादित्याशंक्याजहत्स्वार्थलक्षणयावेदपदेनवर्णादेरपिसंगृहीतत्वाददोषइत्येवंपरत्वेनात्रेतिग्रंथावतरणं तत्तुप्रोक्तानुपपत्तिग्रस्तमितिदिगित्युक्तं । आचार्याअपि "तथाचजहल्लक्षणयावर्णाअव्याकृताकाशश्चवेदपदेनगृह्यंतइतिभावः । नन्वेवंनित्यावेदाइत्युदाहृतप्रमाणासंगतिः । नहितत्रवर्णानांकूटस्थताघटितंनित्यत्वमुक्तं । अपितुवेदानांसर्वदैकप्रकारत्वरूपमेवनित्यत्वं । नहिवयंवेदस्यकूटस्थनित्यतांब्रूमः । किंतुशब्दतोऽर्थतश्चैकप्रकारतामेवेतितत्वनिर्णयटीकायांव्याख्यातत्वादितिचेन्मैवं । तत्रैव नचवर्णपदादीनामनित्यत्वंवक्तुंयुक्तमितिवाक्यव्याख्यावसरे नकेवलंवर्णमात्रं । नापिपदादिमात्रं । किंतुसमस्ताश्चयथायोगंशाश्वताइतिप्रकारांतरेणास्यवाक्यस्यव्याख्यातत्वाद्ध

र्णानांकूटस्थत्वस्यापितत्प्रमाणार्थत्वेनविवक्षितत्वात् । नह्येतद्व्याख्यानमभिप्रेत्यात्रोक्तप्रमाणोदाहरणेकाप्यसंगतिरितिव्याख्यातवंतः । तदनंतराआचार्याअपीमामेवरीतिमेतद्वाक्यव्याख्यानावसरेप्रतिपादितवंतः । रोट्टीयेपिव्याख्याने "ननुक्रमविशेषविशिष्टवर्णाएववेदोनत्वव्याकृताकाशवदर्थांतर"मित्यारभ्य "ज्ञेय"मित्यंतेनेममेवप्रकारंप्रदर्शयामासुः । तर्कतांडवेस्थलांतरेक्रमस्यकृतकत्वेप्याधुनिकेनाध्यापकेनस्वबुद्धिस्थपूर्वपूर्वदिवसीयक्रमानुसारेणोत्तरोत्तरदिवसेष्विवेश्वरेणापिस्वबुद्धिस्थप्रवाहानादिपूर्वकल्पीयप्रमाणानुसारेणैवोत्तरोत्तरकल्पेष्वपिवेदस्योच्चरितत्वेनस्वातंत्र्याभावेनियतानुपूर्वीकत्वादिरूपोक्तविधापौरुषेयत्वेबाधाद्यभावात् । उक्तंचसुधायां । नियतैकप्रकारत्वमपौरुषेयत्वं । एतदप्युक्तंगौरवदोषेणेति । क्रमाकृतकत्वस्याप्यपौरुषेयत्वप्रवेशेगौरवदोषेणेत्यर्थइत्याद्युक्तेः । चंद्रिकाविवृतौश्रीसत्यानंदतीर्थश्रीचरणाअपीत्थमेवव्याख्या(ख्शा)सिषुः । तथाहि । तत्वनिर्णयतत्वसंख्यानटीकयोर्विरोधंपरिहर्तुंशंकते । नन्विति । अत्रक्रमोनामक्रामिकबुद्धिविषयत्वं । ईश्वरबुद्धेःसर्वविषयसमूहालंबनत्वेपिवेदस्यप्रमापकत्वसिद्धयेऽभिव्यक्तिविशेषक्रमस्याप्यावश्यकत्वं । वर्णमात्रेप्रयोगप्रत्यययोरयोगात्क्रमस्यचसर्वगतनित्यवर्णानांस्वतोदेशतःकालतश्चायोगादितिभावः । अतएवोक्तंतत्वनिर्णये । वर्णादयस्तत्क्रमात्मकोवेदश्चनित्यएवेतिसिद्धमिति । मैवमिति । नचतत्वसंख्यानेवर्णमात्रग्रहणमुदाहृतप्रमाणविरोधात् । पौराणवर्णानामप्यविशिष्टत्वेनपृथङ्नित्यानित्यकोटौनिवेशायोगाच्च । पुराणपदेनतद्वाक्यात्मकग्रंथस्यैवोक्तावृगादिपदवाच्यग्रंथस्यैवप्राधान्येनतदादित्वेनग्रहणस्यौचित्याच्च । वाचाविरूपनित्ययेत्यादिविशेषवाक्यविरोधाच्च । नित्यावर्णाःसमस्तशः । तथावेदाःसमस्ता

श्चतथाव्याकृतमंबरमितितत्वसंख्यानटीकार्थनियामकवायुपुराणप्रमाणविरोधाच्चेतिज्ञेयं । टीकावाक्यत्वाविशेषाद्विरोधशं
कायांविष्णुतत्वनिर्णयटीकानुरोधेनतत्वसंख्यानटीकैवकुतोनव्याख्येयेत्यतःप्रमाणमुक्त्वा युक्तोयुक्तश्चयद्यर्थआगमस्येत्यनु
व्याख्यानोक्तंन्यायंचाह । युक्तंचैतदिति । नचेश्वरबुद्धिस्थत्वाविशेषेणपुराणानामप्यपौरुषेयत्वापत्तिः । कल्पभेदेनक्रमव्य
त्यासाभावमात्रेणापौरुषेयत्वाभावस्यपुराणानितदर्थानीत्यादौसमर्थितत्वात् । तर्ह्याप्तवाक्यस्याप्रामाण्यमेवप्राप्तमतआह ।
तट्टीकायामिति । ननुतर्हिसर्गेसर्गेऽमुनैवैतइतिपुराणवाक्योक्तप्रत्यभिज्ञापरामर्शकस्यप्रत्यभिज्ञाविरोधस्योक्तत्वादित्यादिवा
क्यस्यव्याख्यावसरेनचसादृश्यादेतएवेत्युक्तं । तथासत्यपौरुषेयत्वसिद्धेर्दुर्वारत्वादित्युत्तरटीकायांकथमीश्वरीयक्रमस्यैवकृ
तकत्वाभ्युपगमइत्यतआह । कृत्वाचिंतयेति । अनादिभूतस्यापीशबुद्धिविषयीभूतवेदक्रमस्योत्पत्त्यंगीकारेपिपुराणादिव्या
वृत्तमपौरुषेयत्वमक्षतमित्यभ्युपगमवादेनेत्यर्थः । अतएवोक्तमुपलक्षणंचैतत् । जन्मादिवाक्यगतिकथनविरोधाच्चेत्यपिद्र
ष्टव्यमिति । तर्हिकृत्वाचिंतापक्षेत्रपूर्वपक्षेऽनादित्वोक्त्ययोगादाकाशाधिकरणादभ्यधिकाशंकोत्थानायोगादेतदधिकरणवै
यर्थ्यमित्यतआह । अनादित्वोक्तिरिति । कृतकस्यापिपूर्वतनक्रमव्यत्यासेनक्रमांतरस्यकेनाप्यकरणात्तदधीनत्वं । तावता
पिपूर्वपक्षोदयसंभवात् । एवंतत्वसंख्यानटीकायानिरवकाशत्वेनतदनुसारेणतत्वनिर्णयटीकायाव्याख्येयत्वान्नतत्वनिर्णय
टीकानुसारेणवेदस्यकृतकत्वसिद्धिः । तथाचवेदस्यानादित्वात्तत्स्वभावस्यगानत्राणकर्तृत्वादिरूपस्यप्रवृत्तिनिमित्तस्यनेशा
धीनत्वमित्युपपादितं । इदानींतुमाभूत्तस्यानादित्वं । नच्चैवमनादित्वोक्त्यनुपपत्तिरितिवाच्यं । अनादित्वाभावेप्यनादि

त्वाभ्युपगमेनकृत्वाचिंतयाऽनादित्वोक्तिसंभवात् । नचकृत्वाचिंतयानानादित्वोक्तिःसंभवति । प्रयोजनाभावेनकृत्वाचिंतायाएवानुपपत्तेरितिवाच्यं । अनादिस्वभावनियामकत्वरूपमहागुणसिद्ध्यर्थमनादिस्वभावनिमित्तकशब्दांतरसमन्वयन्यायः फलिष्यतीतिप्रदर्शनार्थत्वेनतस्यावश्यकत्वात् । यथाऽऽकाशाधिकरणेऽवकाशप्रदत्वस्याचेतनस्वभावत्वाभावेपिसिद्धांतेतस्येशतंत्रत्वसमर्थनंस्वभावनियामकत्वरूपमहागुणसिद्ध्यर्थंस्वभावनिमित्तकशब्दांतरसमन्वयन्यायःफलिष्यतीतिकृत्वाचिंतया तथेदमपीतिमनसिनिधायवापक्षांतरमाह । कृत्वाचिंतयेति । कृत्वाचिंतयानादित्वोक्तिरित्येकंवाक्यं । अनादित्वाभावेतथाव्यपदेशेनियामकमाह । अनन्याधीनत्वादितीति । वस्तुतस्तु मूलपूर्वटीकातत्वनिर्णयटीकादिषुव्यामिश्रोक्तिरेवदर्शनभेदंव्यशिश्रणत् । नचैवमीश्वरबुद्ध्युपहितानांक्रमविशिष्टवर्णानांनित्यत्वांगीकारे यद्यदभिन्नाभिन्नंतत्तेनाभिन्नमितिन्यायेनवर्णानांपरस्परंतादात्म्यापत्तिरितिवाच्यं । क्रमस्यव्यासज्ज्यवृत्तित्वानंगीकारात् । नचैवंसतिवर्णेष्येकैकस्मिन्नपिक्रमप्रत्ययापत्तिरितिवाच्यं । एकैकवर्तिनोपिक्रमस्यपरस्परमुभयनिरूप्यत्वेनैकस्मिंस्तज्ज्ञानापादनस्यसंयोगादिस्थलइवनिराकरणसंभवात् । उदाहृतपांडुरंगीयादिटिप्पणीनांतुक्रमस्यव्यासज्ज्यवृत्तित्वमभ्युपेत्यप्रवृत्तत्वेनोपलक्षणयास्यापिपक्षस्यसंमतत्वेनतद्विरोधाभावात् । एतच्चद्वित्वादिसंख्याव्यतिरिक्तानां “संयोगश्चविभागश्चे”त्यादिनैकैकवृत्तितासमर्थनेनैवज्ञापितमितिनात्रमूलान्वेषणेप्रयतितव्यं । यद्यप्यत्रबहुवक्तव्यमस्ति । तथापिग्रंथविस्तरभयादुपरम्यते । नित्यंनिरूप्यक्रमप्राप्तंनित्यानित्यं

निरूपयतीत्याह ॥ नित्यानित्यमिति ॥ पुराणमाद्यंयेषांतेपुराणाद्याः । आद्यपदग्राह्यस्यगणनायांपुरुषायुषपर्यवासा नंस्यात् । अतःसामान्यतःसमासार्थमाह ॥ पुराणाद्याइति ॥ तथाचपुरुषकृतसंदर्भक्रमवंतिवाक्यानीत्यर्थः । एवंचपद पंक्तिज्ञानमात्रेणप्रयुक्तस्यशुकतोकादिवाक्यस्यसंग्रहोभवतीतिज्ञेयं । एकाविधा एकःप्रकारः । एकोभागइतियावत् । अप रेत्यादौविधेत्यन्वेति । इतित्रिधेत्यर्थः । तेनैतदन्यस्यानित्यानित्यत्वशंकानिरासः । ननु "पुराणाद्याःकालःप्रकृतिरेवच । नित्यानित्यंत्रिधाप्रोक्त"मितिप्रोक्तवतोमूलकारस्य नित्यानित्यप्रकारनिरूपणानिपुणतेत्याशंकते ॥ नन्विति ॥ तर्हिकिंकृ

**नित्यानित्यंविभागेनाह ॥ पुराणाद्याःकालःप्रकृतिरेवच । नित्यानित्यंत्रिधाप्रोक्तं ॥ पुराणाद्याःपौरुषेयग्रंथाएका विधा । कालोपरा । प्रकृतिरन्या । ननुचत्रिधेतिप्रकारत्रैविध्यमुक्तं । नचात्रकश्चित्प्रकारोदर्शितः । किंतुवस्तु निर्देशएवकृतः । नैषदोषः । यन्नसर्वथाकूटस्थंनाप्यनित्यमेव तदुच्यतेनित्यानित्यं । तस्यातिस्रोविधाःसंभवंति ।**

तमाचार्यैरित्यतआह ॥ किंत्विति ॥ वस्तुनिर्देशः धर्म्युद्देशः । परिहरति ॥ नैषदोषइति ॥ प्रकारत्रयानिरूपणाख्यो दोषइत्यर्थः । तंप्रकारंदर्शयति ॥ यन्नसर्वथेति ॥ सर्वथा सर्वप्रकारेण । कूटस्थं निर्विकारं । अनित्यमेव उत्पत्तिमत्त्वेस तिविनाशवदेव । तन्नित्यानित्यमुच्यतइत्यर्थः । केवलनित्यत्वानधिकरणत्वेसतिकेवलानित्यत्वानधिकरणत्वंनित्यानित्य त्वमित्यर्थः । सत्यंतानुक्तावव्याकृताकाशादावतिव्याप्तिः । तदपाकरणार्थंविशेषणभागः । तावत्युक्तेघटादौकेवलानित्ये

ऽतिव्याप्तिरितितत्पराकृत्यैविशेष्यभागः । तस्य नित्यानित्यस्य । ताविधादर्शयति ॥ उत्पत्तीत्यादिना ॥ इयंचविधापुराणादेरर्थतएकप्रकारत्वाच्छब्दतोव्यत्यस्तेश्चसंभवति । यथोक्तं "पुराणानितदर्थानिसर्गेसर्गेन्यथैवत्वि"तितत्वनिर्णयवाक्यव्याख्यानावसरेटीकायां "पौरुषेयत्वनिमित्तएवानित्यत्वव्यपदेशोनतुविनाशनिमित्तइत्यर्थः । अतएवत्वनित्यानीतिसंबंध" इत्यादिना । नन्वेवंचेत्पुराणानांनाशोनास्तीत्यागतमितिचेत् कोनेत्याह । यथावेदस्येशबुद्धिगतत्वंनिमित्तीकृत्यनित्यत्वमुच्यतेतथापुराणेपिसुवचत्वात् । अतएवमुक्तैरपिपठ्यते । श्रूयतेहि "ब्रह्मात्वोवदतिजातविद्या"मित्यादि । जातविद्यां पुराणं । त्वः कश्चिद्ब्रह्मा वदतीतितदर्थः । ननु नपुराणस्योत्पत्तिरंगीकारार्हा । ईश्वरस्यसर्वज्ञत्वेनैष्यत्पुराणस्यापितद्बुद्धि

## उत्पत्तिमत्त्वेसतिविनाशाभावः,

गतत्वादितिचेन्न । ईश्वरेणसदावर्तमानतयानुभूयमानत्वस्यानादित्वप्रयोजकत्वेनतत्करणात्पूर्वंतेषांवर्तमानतयानुभवाभावात् । किमत्रप्रमाणमितिचेत् पुराणजनिवाक्यान्यथानुपपत्तिरेवेतिब्रूमः । ननूत्पन्नपुराणानांनाशाभावेकल्पांतरेपुनारचनं कुतइतिशंकातु "प्रमाणप्रश्नश्चेदुक्तादेवपुराणवाक्यादितिब्रूमः । प्रयोजनप्रश्नस्त्वयुक्तः । ईश्वरप्रवृत्तेःसर्वत्रप्रयोजनशून्यत्वात् । परप्रयोजनानितुसूक्ष्माण्युत्प्रेक्षितुंनप्रभवामः । भगवानाचार्योपीदानींप्रयोजनाभावान्नावादीदितितत्वनिर्णयटीकातोवारणीया । नन्वेकस्मिन्ब्रह्मकल्पेषट्त्रिंशत्सहस्रादिनानिभवंति । एवंचतेषुजातानांपुराणानामेकार्थत्वेपिपूर्वदिनपुराणे

नैवतदर्थस्यज्ञातत्वादुत्तरेषांनिरधिकारिकत्वंस्यात् । अर्थीसमर्थोविद्वान्हितत्राधिक्रियते। ज्ञातेर्थिताभावादितिचेत् सत्यं। तथापिसंभवतिदेवानांतत्राधिकारः । पुराणस्यपूर्वपूर्वापेक्षयोत्तरोत्तरेषामर्थाधिक्यस्यविद्यमानत्वात् । नचैवंसमानार्थता भावः । शतेपंचाशन्न्यायेनपूर्वपूर्वपुराणार्थानामुत्तरोत्तरेषुसत्त्वात्तदपेक्षयातद्व्यवहारस्योपपन्नत्वात् । नचानंतब्रह्मकल्पीयपुराणानांसमानार्थत्वेतदानंत्यंनोपपद्यते । एकैकार्थप्रतिपादकपदानांमितत्वेन जन्माद्यस्ययतः सृष्ट्याद्यस्ययतः सर्गाद्यस्ययतः जन्मप्रभृतियस्मादित्यादिपदसमूहपरिवर्तनेनापिभेदकानांमितत्वाद्ग्रंथानंत्यानुपपत्तेरितिवाच्यं । ईशाचिंत्याद्भुतशक्त्यैवोपपन्नत्वात् । विस्तरस्तुसत्तत्वरत्नमालादितोऽनुसंधेयः । द्वितीयप्रकारंदर्शयति ॥ एकदेशैरिति ॥ एकदेशैः

एकदेशैरुत्पत्तिविनाशावेकदेशिनस्तदभावः,

निमेषाद्यैः। उत्पत्तिविनाशौ वर्तेते । एकदेशिनः कालप्रवाहस्य । तदभावः उत्पत्तिनाशाभावः। ननु कालावयवानामुत्पत्तिविनाशवत्त्वेतदुपादानंवाच्यं । नचस्वयमेवस्वंप्रत्युपादानंभवति। विरोधात् । नचसर्वोपादानप्रकृतेस्तदेकदेशकालोपादानत्वमक्षुण्णमेवेतिवाच्यं। विकल्पासहत्वात् । सर्वजन्योपादानंयाप्रकृतिःसैवकालोपादानमुतान्या। नप्रथमः । क्षणलवादिकालावयवानांसर्वव्याप्तत्वेनविशिष्टप्रकृतेरपिकालएवोपक्षीणत्वात्पृथग्जगदुपादानाभावेननिरुपादानकसृष्टेरभावात्तदभावापत्तेः। नद्वितीयः । असंमतेरितिचेदुच्यते । युगपदेवयावद्देशव्याप्तलवादिकालोपादानत्वंजगदुपादानत्वंचेशशक्त्या

प्रकृतेर्घटते । यथोक्तंसुधायांवैशेषिकपरीक्षावसरे "अनित्यत्वेकारणंवाच्यमितिचेत्सत्यं । उपादानंतुप्रकृतिरेवे"ति । अस्मा कंत्वीशशक्त्यैवोपपद्यतइति । अन्येतुजगदुपादानप्रकृत्यतिरिक्ताकालोपादानप्रकृतिः । साचैकंकालांशंस्पृष्ट्वास्वयमुपरमते । तदुत्तरकालोपादानभूताप्रकृतिरन्यैव । ततोप्युत्तरकालस्योपादानंतुतत्पूर्वकालांशस्योपादानभूतप्रागुपरताप्रकृतिरित्येवं सापरिवर्ततइति । नचतत्रज्ञापकाभावः । एतत्समाननिमित्तकारणस्थलेविचारपूर्वंविनिष्कृष्टस्यात्रापितत्त्वसंभवात् । तथा हिवैशेषिकपरीक्षासुधायां "स्यादेतत् । कालस्तावत्सर्वोत्पत्तिमन्निमित्तकारणं । नचकालस्यकालांतरंनिमित्तमस्ति । तत्क थंतस्योत्पत्तिः । पूर्वःकालःपरस्यकारणमितिचेन्न । इदानींजातइत्यधिकरणतयाकालस्यकारणतावधारणात् । कारणस्य कार्योत्पत्तिसमानकालतायाः गेहेजातोगोष्ठेजातइत्यादौनिश्चितत्वादित्यतआहेति कालस्यकालगत्वेनेतिमूलमवतार्य व्याख्या यच ननुकालस्यकालगत्वेनेत्युक्तं । तत्रकिंकालःस्वगतःकिंवाकालांतरगतः । नाद्यः । स्वस्कंधारोहणवद्विरुद्धत्वात् । नद्वि तीयः । तदभावात् । भावेवाकालांतरसृष्टिवैयर्थ्यात् । तस्याप्युपपत्तौकालांतरांगीकारप्रसंगादित्यतःसप्रमाणकमुक्तंविवृ णोतीतीशोदेशश्चकालश्चेत्यादिमूलमवतार्य तदुपरि एतदुक्तंभवति । कालातिरिक्तकार्याणामेवकालोधिकरणतयाकारणं । नकालस्तुस्वयमेवस्वस्याधिकरणतयाकारणं । श्वोघटंस्रष्टास्मीत्यत्रेवकालसृष्टिंवांछतःपरमेश्वरस्याधिकरणतयोद्देश्यःकालः कइतिप्रश्ने यःसृज्यःसएवेत्युत्तरं अधिकरणाधिकर्तव्यतात्वेकस्यैवश्रुत्यादिसिद्धा । विशेषबलाच्चोपपद्यते । अतोनकालस्यो त्पत्तौकाचिदनुपपत्तिरिती"ति । नचोपादानंतुप्रकृतिरेवेतिसुधाविरोधः । प्रकर्षेणक्रियतेऽनयेतिव्युत्पत्त्योपादानपरत्वात्त

च्छब्दस्य । नचकथंयोगेनरूढ्यपहारइतिशंक्यं । व्याप्तकालावयवंप्रतिप्रकृतेरुपादानत्वागीकारेपूर्वोपदर्शितबाधकादेवात्र रूढिपरिहारस्यन्याय्यत्वात् । किंचव्याप्तैकक्षणंप्रतिसर्वस्याउपादानत्वेचोत्तरक्षणंप्रत्युपादानाभावःप्रसज्यते । नचपूर्वक्षण नाशानंतरंतदुपादानतयाप्राक्स्थितायाः प्रकृतेरुत्तरक्षणंप्रत्युपादानत्वमितिवाच्यं । पूर्वक्षणविनाशोत्तरक्षणोत्पत्त्योर्मध्ये कालाभावप्रसंगात् । तदभावेचोत्तरत्वस्यापिदुर्निरूपत्वात् । नचपूर्वक्षणविनाशसमयएवोत्तरक्षणोत्पत्तिरितिवाच्यं । विनाशानंतरमेवप्रकृतिभावप्राप्त्यानाशसमयउपादानाभावात् । नाशसमयइतिसमयशब्दस्यकालपरत्वेनकालसद्भावतद्ध्वं सयोर्यौगपद्यप्राप्त्याभावाभावयोर्विरोधाभावप्रसंगात् । रीत्यंतरादर्शनाच्च । तूष्णीमीशाचिंत्यशक्त्येतिवक्तुमनुचितत्वात् ।

स्वरूपेणोत्पत्त्याद्यभावेप्यवस्थागमापायवत्त्वंचेति ।

अतोनत्रिगुणात्मकप्रकृतेरुपादानत्वंयुक्तिसहमितिकालस्यकालएवोपादानमिति । विस्तरस्तुसत्तत्वरत्नमालाटीकातोबोध्यः । तृतीयप्रकारंदर्शयति ॥ स्वरूपेणेति ॥ स्वरूपेण मूलरूपेण । अवस्थानं उपादेयानामागमापायित्वमुत्पत्तिविनाशसहितत्वं । ननुमूलेकथंप्रकृतिरित्येकवचनंगुणत्रयात्मिकायास्तस्याअनंतत्वादितिचेत् । उच्यते । एकैवप्रकृतिः । अजामेकामि तिश्रुतेः । तदप्येकत्वंनाव्याकृताकाशस्येव । अयःपिंडादिवत् । यथावालुकापिंडस्यवालुकानांसंश्लेषविशेषवत्त्वेनैकएवायं वालुकापिंडइतिसमुदायवैलक्षण्येनप्रत्यक्षादिसिद्धैकत्वाधिकरणत्वेपि स्थूलसूक्ष्मादितयाऽवस्थितवालुकानांभेदःप्रतीयते । एवमंतर्भेदघटितमेव । अतएवशास्त्रेक्वचित्प्रकृतयइतिबहुवचनं, क्वचित्प्रकृतिरित्येकवचनंचसंगच्छते । एवमेकैवप्रकृतिःसर्व

त्रव्याप्ता । महांतंचसमावृत्यप्रधानंसमवस्थितं । अनंतस्यनतस्यांतःसंख्यानंवापिविद्यतइत्युक्तेः । महदादितत्वविनाशेतत्तत्सूक्ष्माण्यव्यक्ततामापद्यंते । गुणत्रयांशभूतमहदाद्युपादानभूतभागविशेषास्तुगुणत्रयेविशंति । गुणत्रयेपियद्रजस्तृतीयतात्वयोक्तदिशासत्वेतमसिचमिश्रीभवति । नतदासत्वादिनाम । प्रकृतेरेवहिसोच्यते । इयंचसाम्यावस्थाप्रलयः । उक्तंचगीताभाष्ये "अव्यक्तस्याप्यन्यथाभावाख्योविनाशोस्ती"ति । प्रमेयदीपिकायांच "अन्यथाभावोवैषम्यपरित्यागेनसाम्यावस्थापत्ति"रिति । अथ प्रकृतेःक्षोभकंरूपंदैवंनारायणाभिधं । यत्तेनप्रकृतेःक्षोभेप्राप्तेकिंचिद्विकारिणइतिपूर्वमेकीभूतांशविशेषभूतस्यविभागेततःकिंचित्स्थूलत्वेनोपचयरूपविकारेसति विभक्तभागत्रयस्यसत्वंरजस्तमइतिनाम । एवंप्रकृतेरेकदेशतोगुणत्रयात्मनाविकृतत्वेनसमग्रप्रकृतेःक्षोभविशेषसद्भावेनच "विकारोऽव्यक्तजन्मही"ति "प्रकृतिश्चजडत्वात्परिणामिनी"तिगीताभाष्ये, "अव्यक्तस्यजन्मवतोविकारोजनिरुच्यत"इत्येकादशतात्पर्ये, "प्रधानंविकृतैरपीत्यनुव्याख्यानादौचप्रकृतिजनिव्यवहारः । प्रकृतिविकारतयातज्जन्यत्वमपेक्ष्य "त्रयःप्रकृतिजागुणाः । ससर्जभगवानादौत्रीन्गुणान्प्रकृतेःपर" इत्यादौगुणत्रयस्यप्रकृतिकार्यत्वव्यपदेशः । वस्तुतोव्याप्तप्रकृतेरपिगुणत्रयसूक्ष्मभागरूपतया "त्रिगुणात्मकंप्रधानंचरजःसत्वंतमस्तथे"तिजन्यसत्वरजस्तमसांसकाशात्पृथक्प्रधानस्यापित्रिगुणात्मकत्वोक्तिश्चोपपद्यते । एतद्गुणवैषम्यंसृष्टिरित्युच्यते । प्रकृतेर्व्याप्तत्वंतुकार्यकारणात्मना । कार्यावस्थानप्रदेशेकार्यमेववर्तते । नकारणप्रकृतिः । सातुतदन्यदेशइत्येवंक्वचित्कार्यंक्वचित्कारणमित्येवंनमंतव्यं । किंतु "कारणेषुस्थितंकार्यंव्याप्तंकार्येषुकारण"मितिगीतातात्पर्योदीरितरीत्याबोध्यं ।

ननुपरिमितस्यमहदादिकार्यस्यकथंव्याप्तप्रकृतिगतत्वमितिचेन्न । अधश्चोर्ध्वंप्रसृतास्तस्यशाखाइत्याद्युक्तेःपरिमितानामपि महदादीनांसूक्ष्मांशैःस्वकारणकार्यव्याप्तत्वसंभवात् । व्यक्तमेतद्गीताभाष्यप्रमेयदीपिकयोरित्यलं । ततःकिंप्रकृतइत्यतआह ॥ तदेतदिति ॥ ननु त्रयोऽवयवायस्यतत्त्रयमितिविधातिरिक्तावयविनोऽभावात्कथमितिचेन्न । समुदायातिरिक्तावयवांगीकृतौतदनंगीकृतौविधाचविधाचविधाचेतिविधास्तासांत्रयं । एवंचेदवयविघटकत्वेनपृथक्पृथगवयवविधोपस्थितेस्तयब्विवक्षितेचावयवेसंभवतीतिनायजोप्यनुपपत्तिरितिसंभवात् । अयंप्रकारस्तुद्वित्रिसूत्रव्याख्यानावसरेतत्वसुबोधिन्यां "कथं

तदेतद्विधात्रयमुक्तवस्तुत्रयेस्तीतितस्यैवग्रहणंकृतं । नन्वेवंसत्यवांतरभेदैर्वि
धांतरमुत्प्रेक्षितुंशक्यमित्यतएवेत्युक्तं । तत्रोपपादकाकांक्षायांप्रोक्तमित्याह ।

मुनित्रयमिती"त्याद्याशंक्यविस्तरतोनिरूपितइतिततोऽनुसंधेयः । उक्तवस्तुत्रये पुराणाद्याःकालःप्रकृतिरित्युक्तवस्तुत्रये । इति इतिहेतोः । ननु भावरूपाज्ञाने उत्पत्तिरहितत्वेसतिविनाशित्वरूपविधांतरस्यसत्वात् वेदावांतरप्रभेदे उत्पत्तिमत्त्वेसतिविनाशाभावरूपसामान्यधर्मेसतिक्रमव्यत्यासाभावरूपविधांतरसद्भावात्तत्कुतोमूलकृन्नोदाजहार । यदिचतयोर्नलक्ष्यता तर्हितत्रातिव्याप्तिःस्यात् । किंच "मूलप्रकृतिरविकृति"रित्यादिसांख्याद्युक्तविधांतरस्याप्यत्राकथनान्न्यूनता स्यादित्याशंक्यपरिहरति ॥ नन्विति ॥ अवांतरभेदैः पूर्वोक्तभेदकधर्मैः । उत्प्रेक्षितुं विनामानंबुद्ध्याकल्पयितुं । उक्तं प्रकृ

तिरेवेत्यत्र । उपपादकाकांक्षायां नियामकाकांक्षायां । प्रोक्तं प्रकर्षेणोक्तं । आह भगवानानंदतीर्थमुनिः । तेनापिकिमुक्त मासीदित्यतआह ॥ शास्त्रीयेति ॥ शास्त्रशब्दात् "वृद्धाच्छ" इतिछप्रत्ययेतस्येयादेशेरूपं । अविद्यायाःद्वितीये । वेदा वांतरप्रभेदस्यप्रथमेंऽतर्भावइत्यत्रैवांतर्भावइत्यर्थः । अत्रकंठतोनुक्तिस्तुतत्वविवेकेपुराणस्यैवबोध्या । अन्यासां सांख्याद्यु त्प्रेक्षितानां ॥ अनादरणीयत्वमिति ॥ अप्रामाणिकत्वादितिभावः । ननु पुराणघटकवर्णानामनादित्वात् कालस्यवैशे षिकादिभिर्विभुत्वादनादिनित्यतयांगीकारात् । प्रकृतेरपिसांख्येनतथांगीकृतत्वात्कथंपुराणाद्याइत्युक्तमित्याशंकापरिहार

शास्त्रीयविधानामत्रैवांतर्भावोऽन्यासामनादरणीयत्वंचेति । अथवा "पुराणानितदर्थानि सर्वेनि मेषाजज्ञिरे विकारोऽव्यक्तजन्मही"त्याद्यागमपरिग्रहार्थंप्रोक्तमित्युक्तं । अतएवविरोधोपिपरि हृतः । नन्वत्रयस्योत्पत्त्यादिकंतदनित्यमेव । यस्यतुतन्नास्तितन्नित्यमेव । नित्यानित्यं क्वास्तीति ।

त्वेनापि "प्रोक्त"मित्येतद्व्याख्याति ॥ अथवेति ॥ पुराणानितदर्थानीतिप्रथमकल्पेप्रमाणं । सर्वेनिमेषाजज्ञिरइतिद्वितीये । विकारोऽव्यक्तजन्महीतिप्रकृतिजनिरूपतृतीयइतिविवेकः । आदिपदेनस्थलत्रयेप्युत्पत्तिप्रतिपादकवाक्यांतराणिग्राह्याणि । एतेनान्यदपिसिद्धमित्याह ॥ अतएवेति ॥ प्रमाणप्रमितत्वादेवेत्यर्थः । विरोधः नित्यत्वानित्यत्वयोरेकत्रसहानवस्थान रूपः । ननु भवत्वियंपुराणेव्यवस्था कालप्रवाहप्रकृत्योस्तुसानसंभवतीतिशंकते ॥ नन्विति ॥ यस्य उपचयभागस्य ।

यस्य अंशिनः । तत् उत्पत्त्यादि । क्वास्ति व्यधिकरणत्वादितिभावः । उत्तरमाह ॥ **मैवमिति** ॥ एतत् व्यधिकरणत्वं । यदीतिवाक्ये "विशिष्टशुद्धयो"रित्यपिपूरणीयं । अत्यंतभेदः तार्किकमतइव । अन्यत्र तत्वविवेके । उपपादितं पुराणादियेनांशेननित्यंतमंशंनित्यवर्गेनिधायेत्यादिनोपपादितमित्यर्थः । यद्वा "तंतुभ्योऽन्यःपटःसाक्षात्कस्यदृष्टिपथंगत"इत्यादिनान्यत्र गीतातात्पर्यादावुपपादितमित्यर्थः । इतिशब्दो "नित्यावेदा"इत्यादिकारिकाव्याख्यासमाप्तौ । तथाहि तंतुसमूहेपटइतिमतिर्जायते । अतोऽभेदः । नैकस्मिन्नेवतंतौतद्बुद्धिरितिभेदश्च । पूर्वोत्तरभावापन्नाअनेकेकरिणएवकरिप्रवाहइति, एकस्मिन्करिणिनप्रवाहइतिचाबाधितप्रतीतेर्भेदाभेदएकत्रप्रेक्षावदनुशिक्षितःसंभवति । यथावाहिमूषकादीनांस्व

**मैवं । स्यादेतदेवं । यद्यंशांशिनोर्विकारविकारिणोर्वाऽत्यंतभेदस्स्यात् । नचैवमित्यन्यत्रोपपादितमिति ।**

भावतोविरोधिनामृष्याश्रमेमिश्रीभूयावस्थानंतथात्रापीतिनविरोधः । सन्न्यायरत्नावल्यांच "अंशिनोंऽशै"रित्यनुव्याख्यानविवरणरूपिण्यां "अशेषांशैर्विनाऽभावादंशिनोऽभेदः । एकैकांशेनविनापीतरांशात्मकतयाभावाद्भेदइतिभेदाभेदावनुभवसिद्धावित्यर्थ"इतिनयचंद्रिकायांच "अंशिनःसर्वांशैरभेदः । सर्वांशैर्विनांऽशिनएवाभावात् । एकैकांशेनभेदाभेदौ । तद्विनाप्यंशिनोऽवस्थाना"दिति । अत्रचचेतनेऽचेतनेचयावद्द्रव्यभाविनांधर्माणांधर्मिणाऽत्यंताभेदः । चेतनएवायंनियमः । अचेतनेयावद्द्रव्यभाविनामपिभेदाभेदौ । नात्यंताभेदइतिद्वौपक्षौ । उभयत्रापिबहुमूलटीकासंमतेरिति । विस्तरस्तु "अत्र

प्रायःसुधानुसारेणचर्चाक्रियत"इत्यारभ्य क्रमादनुव्याख्यानगीतातात्पर्योपाधिखंडनटीकान्यायदीपिकाबृहद्भाष्यसमयच रणसुधाछांदोग्यभाष्यऋग्भाष्यटीकावादावलीश्रीपद्मनाभतीर्थश्रीचरणरचितोपाधिखंडनटीकाः पुनरपिऋग्भाष्यवैशेषिक परीक्षासुधारंभणाधिकरणसुधातत्वविवेकटीकाः पुनर्गीतातात्पर्योपाधिखंडनमंदारमंजरीवाक्यान्युदाहृत्यसार्धशतग्रंथ्याच "इत्येषादिगि"त्यंतेनसत्तत्वरत्नमालायामनुसंधेयः । प्रतिज्ञानुसारेणप्रकृतमनुसरति ॥ अनित्यमिति ॥ असंसृष्टंचसंसृ ष्टमितिनिर्देशःप्राधान्यमनुसृत्येतिबोध्यं । सम्यक् सामीचीन्येन । अतथाभूतं असम्यक्सृष्टं । इयत्ता मर्यादा । तस्याअ

अनित्यंविभज्यदर्शयति ॥ अनित्यंद्विविधंमतं । असंसृष्टंचसंसृष्टं ॥ सम्य
क्सृष्टंसंसृष्टं । अतथाभूतमसंसृष्टं । सम्यक्त्वायाइयत्ताभावात्रैविध्याद्यपि
किंनस्यादित्यतोमतमित्युक्तं । तद्व(च्चव)क्ष्यामः । तत्रासंसृष्टंनिर्दिशति ॥

भावात् । अन्यूनातिरिक्तवर्तिनः एकस्यसम्यक्सृष्टत्वस्यदुर्निरूपत्वादितिभावः । किंनस्यात् किंनभवेत् । अनेनद्वैविध्य स्यप्रमाणसिद्धत्वान्नत्रैविध्याद्यंगीकारार्हमितिसूचयति । तत्किंप्रमाणमित्यतआह ॥ तदिति ॥ तत् अनित्यद्वैविध्यस्यप्रमाण प्रमितत्वं । वक्ष्यामः । नन्वेषांचतुर्विंशतितत्वानामित्यादिनेतिज्ञेयं । तत्र तदुभयमध्ये । महान् महत्तत्वं । अहं अहंका रतत्वं । बुद्धिः बुद्धितत्वं । मनः मनस्तत्वं । खानि इंद्रियाणिदश । खमिंद्रियं । इंद्रियेपिखमितिविश्वामरौ । पंचेतिमा

त्रापदेनभूतपदेनचान्वेति । तेचशब्दस्पर्शरूपरसगंधाः । भूतानिचाकाशवायुतेजोजलपृथिवीरूपाणि । एकान्वयभ्रमनिरासायाह ॥ संसृष्टमिति ॥ अंडं ब्रह्मांडं । तद्गं ब्रह्मांडांतर्गतंभौतिकं । मूले अंडंसमस्तं, तद्गंचभौतिकंचसंसृष्टंप्रकीर्तितमित्यन्वयः । नन्विदमसंसृष्टत्वंनामैकदेशेनोत्पत्तिर्नभवति । किंतुधर्मांतरमेवेत्यतआह ॥ नचेति ॥ टीकायां चतुर्विंशतितत्वानामितिविशेषणसमासः । नच "विशेषणंविशेष्येणे"तिसमासोंगीकर्तुंनशक्यते । तद्विशेषक "दिक्संख्येसंज्ञाया"

असंसृष्टंमहानहं ॥ बुद्धिर्मनःखानिदशमात्राभूतानिपंचच ॥ संसृष्टंनिर्दिशति ॥ संसृष्टमंडंतद्गंचसमस्तंसंप्रकीर्तितं ॥ नन्वेषांचतुर्विंशतितत्वानामसंसृष्टत्वंनामयद्येकदेशेनोत्पत्तिस्तर्ह्यनुत्पन्नस्यासत्त्वादुत्पन्नमेवतत्वं । तच्चसंसृष्टमेवेतिनद्वैविध्यं । नचप्रकारांतरमस्तीति । मैवं । सूक्ष्मरूपेणनित्यानांमहदादीनांप्राकृताद्यंशै(प्रकृत्याद्यंशै)रुपचयमात्रंक्रियतइतितान्यसंसृष्टानि ।

मितिसंज्ञायामेवतस्यनियमितत्वात् । चतुर्विंशतितत्वशब्दस्यचासंज्ञात्वादितिवाच्यं । षोडशपदार्थादिपदवद्विशिष्टस्यशब्दस्यसामयिकसंज्ञात्वांगीकारात् । विशेषस्तु "पंचस्कंधेभ्य"इतितत्वनिर्णयटीकाव्याख्यातोऽवगंतव्यः । तेन द्विगुसमासे चतुर्विंशतितत्व्याइतिभाव्यमितिशंकानवकाशः । इतिशब्दःशंकासमाप्तौ । परिहरति ॥ मैवमिति ॥ सूक्ष्मरूपेण अनुपचितरूपेण । प्राकृताद्यंशैः प्रकृतेरमीप्राकृताः प्रकृतिसंबंधिनोंशाः । आदिनामहत्तत्वादिसंबंधिनश्चग्राह्याः । तैरुपचय

मात्रं स्थूलतामात्रं । नतुसामस्त्येनोत्पत्तिः । इति इतिहेतोः । तानि महदादीनि । प्रकृत्यंशैर्महतोमहदंशैरहंकारस्योपच यइत्यादिक्रमेणज्ञेयं । ब्रह्मांडांतर्गतानामप्येवंविधत्वेनानित्यत्वस्यद्वैविध्यंनसंभवतीत्यतआह ॥ नचैवमिति ॥ एवं महदा दिवत् । स्वरूपेणानुत्पन्नत्वेसतिचोपचितरूपेणोत्पत्तिमंतिचेतिहेतोःसंसृष्टानीत्यर्थः । तेषामपिताद्दशत्वान्नचनैवमित्युक्ति युक्तेतिवक्ति ॥ तेषामिति ॥ तेषां ब्रह्मांडांतर्गतानांघटादीनां । मूलरूपं आदिकारणरूपं । परिहरति ॥ नेति ॥ महदा

नचैवंब्रह्मांडंतदंतर्गतानीतिसंसृष्टानि । तेषामपिमूलरूपंनित्यमितिचेन्न । साक्षान्मूलरू पस्याविवक्षितत्वात् । एवंसतिमहदादीनांनित्यानित्यत्वंकथंनस्यादितिचेत्स्यादेवंयदिसूक्ष्म रूपेमहदादिव्यवहारःस्यात् । किंतुप्रकृतिरेवसोच्यते । केचिन्महदादिस्वरूपमेवनाभ्युप गच्छंति । दूरेणोक्तंविशेषं । तेषामतिबहुतरागमविरोधंदर्शयितुंसंप्रकीर्तितमित्युक्तं ।

दिचतुर्विंशतितत्वानांसाक्षान्मूलरूपस्यनित्यत्वेनविवक्षितत्वादभिप्रेतत्वादित्यर्थः । नित्यतयेतिशेषः । ब्रह्मांडतदंतर्गतानां महदादिकार्यद्रव्याणांसाक्षान्मूलस्यमहदादेर्वैकृतस्यानित्यत्वादितिभावः । एवंसति सूक्ष्मोपचितभागैर्नित्यानित्यत्वे । परि हरति ॥ स्यादेवमिति ॥ तर्हितन्मूलंकिंपदाभिधेयमित्यतआह ॥ किंत्विति ॥ संप्रकीर्तितमित्यत्रोपसर्गद्वयव्यावर्त्यंदर्श यति ॥ केचिदिति ॥ उक्तंविशेषं चतुर्विंशतितत्वानामसंसृष्टत्वंब्रह्मांडांतर्गतानांसंसृष्टत्वरूपमित्यर्थः । अतीतिसमोर्थः ।

बहुतरेतिप्रार्थः । केतेबहुतरागमाइत्यतआह ॥ आगमाश्चेति ॥ अन्यत्र पंचभिःपंचभिर्ब्रह्मचतुर्भिर्दशभिस्तथा । एतच्च
तुर्विंशतिकंगणंप्राधानिकंविदुः । सर्गोनवविधःप्रोक्तइतिप्रतिज्ञाय "आद्यस्तुमहतःसर्गोगुणवैषम्यमात्मनः । द्वितीयस्त्वह
मस्तत्रद्रव्यज्ञानक्रियादय"इत्यादिनाभागवतादौ । कुतोत्रनोदाहृताइत्यतआह ॥ विस्तरेति ॥ विस्तरमितिगतं । एवंस्वतं
त्रास्वतंत्रतत्वयोर्निरूपितत्वादुत्तरग्रंथोव्यर्थइत्यतआह ॥ यदीति ॥ कस्मिन्नायत्तं किमधीनं । अधीनोनिघ्नआयत्तइत्य

आगमाश्चान्यत्रद्रष्टव्याः । विस्तरभियानेहोदाहियंते । यदीदंविष्णुव्यतिरिक्तंभावाभावादिभेदाभिन्नंजगदस्वतंत्रं
तर्हिकस्मिन्नायत्तं कस्मिंश्चविषयइत्याकांक्षायामाह ॥ सृष्टिःस्थितिःसंहृतिश्चनियमोऽज्ञानबोधने । बंधोमोक्षःसुखं
दुःखमावृतिर्ज्योतिरेवच । विष्णुनास्यसमस्तस्यसमासव्यासयोगतः ॥ नियमो व्यापारेषुप्रेरणं । बंधः प्रकृतेः ।
मोक्षो बंधात् । आवृतिज्योतिषी बाह्यतमःप्रकाशौ । एवकारोविष्णुनेत्यनेनसंबध्यते । अस्य समस्तस्यास्वतंत्रस्य ।

मरः । कस्मिंश्चविषये आयत्तमितिवर्तते । सृष्टिः सर्जनं । स्थितिः स्थापनं । संहृतिः संहरणं । प्रयोजकव्यापारवाचिनः
शब्दास्तत्संबंधाज्जगतिप्रयोज्येलक्षणयाप्रवर्ततइतिचंद्रिकोक्तेः । सृष्टिःस्थितिःसंहृतिश्चनियमोज्ञानेत्यादिश्रीमद्भाष्योदाहृता
ष्टकबोधकस्कांदवचनेनचस्कन्नस्त्रिकादिकर्तृकतावादइतिज्ञेयं । नियमस्यविषयसापेक्षत्वादाह ॥ नियमइति ॥ नियमोयं
त्रणायांचेतिविश्वः । बंधःप्रकृतेः । पंचमीयंमोक्षावधिमभिधत्ते ॥ बंधादिति ॥ प्राकृतात् । आव्रियतेजनोनयेत्यावृतिः

बाह्यंतमोंधकाराख्यं । बाह्यंज्योतिरालोकादिः । एवकारः ज्योतिरेवचेत्यत्रत्यः । अस्येत्यस्य अस्वतंत्रस्येतिविशेष्योक्तिः । अन्वयपूरणार्थमाह ॥ भवंतीतिशेषइति ॥ आहत्यैतेभवंतीत्यन्वयः । ननु नसमस्तस्याप्यत्रोक्तद्वादशधर्मवत्त्वंसंभवतीतिशंकते ॥ नन्विति ॥ नित्यत्वोक्तिविरोधः नित्यावेदाइत्यत्रनित्यत्वस्ययोक्तिस्तद्विरोधइत्यर्थः । बोधविरोधः एतत्कारिकोक्तबोधविरोधइत्यर्थः । आदिनारमायाबंधादिविरोधोग्राह्यः । तत्र तच्छंकाविषये । समासव्यासशब्दार्थावाह ॥

भवंतीतिशेषः । नन्वेतत्पूर्वविरुद्धं । समस्तस्यसृष्टिसंहारोक्तौनित्यत्वोक्तिविरोधः । अचेतनस्यबोधविरोधइत्यादि । तत्रोक्तं समासेति ॥ समासःसंक्षेपः । व्यासोविस्तारः । तावेव योगौ उपायौ उक्तार्थघटनायां । ततः । इदमुक्तंभवति । उक्तधर्मेषुयत्रतत्वेऽल्पीयांसःसंभवंतितत्रतावंतोविष्णवधीनाज्ञातव्याः । यत्रतुबहवस्तत्रतावंतः । सर्वथास्वरूपस्वभावावस्यतदधीनाविति ।

समासइत्यादिना ॥ समासस्तुसंक्षेपेचसमर्थने । व्यासोमुनौस्याद्विस्तारइतिविश्वः ॥ योगावुपायाविति ॥ योगउपायः । दृष्टायोगाःप्रयुक्ताश्चपुंसांश्रेयःप्रसिद्धयइतिभागवतप्रयोगप्रदर्शनपूर्वगीताभाष्येतथाव्याख्यातत्वादितिभावः । तदुपपादयति ॥ इदमुक्तंभवतीति ॥ उक्तधर्मेषु सृष्टिस्थितीत्याद्युक्तद्वादशधर्मेषु । यत्रयेसंभावितास्तत्रतावंतोभगवदधीनाः । सर्वथा सर्वप्रकारेण । स्वरूपस्वभावौ अस्य विश्वस्य । तदधीनौ भगवदधीनौ । द्रव्यंकर्मचकालश्चस्वभावोजीवएवच

त्वादेः । क्वक्कस्यकस्यसमावेशः । सार्वत्रिकश्चकइत्यतोदर्शयति ॥ तत्रस्थितिनियमाविति ॥ सर्वस्य अस्वतंत्रसामान्यस्य । सृष्टिसंहृतीनित्यानित्यस्य पुराणादेरनित्यस्यासंसृष्टस्यसंसृष्टस्यच ॥ अज्ञानंभावरूपमिति ॥ ज्ञानाभावरूपमेवाज्ञानमित्यज्ञाः । तदपाकर्तुं भावरूपमिति ॥ दुःखस्पृष्टस्य चतुर्मुखव्यतिरिक्तस्य । दग्धपटायमानत्वेनचतुर्मुखस्यापिभावरूपाज्ञानंकैश्चिदंगीकृतमितिसब्रह्मकस्यसर्वस्येति । अत्रार्थेमानानितुसत्तत्वरत्नमालायामृजुप्रकरणेसंगृहीतानितथातट्टीकायांविभावनीयानि । भावरूपाविद्येत्यर्थः । नचेयमप्रामाणिकीतिनांगीकार्येतिवाच्यं । जीवाजानंतिनोहरिमितिस्मृत्याचाविद्याविद्यामावृणोतीत्युच्यते । नचज्ञानाभावस्यतदावरकत्वंयुज्यते । अतःस्मार्तावरकत्वान्यथानुपपत्त्याभावरूपभावःसेत्स्यति ।

तत्रस्थितिनियमौसर्वस्य । सृष्टिसंहृतीनित्यानित्यस्यानित्यस्यच । अज्ञानंभावरूपंदुःखस्पृष्टस्य ।

सत्वादिगुणमयी । अजेद्वेप्रकृतीदुष्टेनृष्वप्रातिस्विकंस्थिते । स्वगुणाच्छादिकात्वेकापरमाच्छादिकापरेत्यादिप्रमाणप्रमितप्रकृतिरेवस्वरूपज्ञानावरकत्वेनविद्याविरोधित्वादविद्येतिगीयते । उक्तंचसुधायां "अतःकामकर्मातिरिक्तंमायाविद्याप्रकृतिरित्यादिशब्दाभिधेयमनाद्येवमकिंपिद्रव्यंस्वरूपचैतन्यावरकमंगीकार्य"मिति । तथा "अतःपरमेश्वरएवसत्वादिगुणमय्याविद्याविरोधित्वेनाविद्ययास्वाधीनयाप्रकृत्याचिंत्याद्भुतयास्वशक्त्याच स्वप्रकाशमपिजीवचैतन्यमाच्छादयतीतियुक्त"मिति । केचिदिमामविद्यांलिंगशरीरमाहुः । तैश्चोत्क्रांतिपादीय "यदिभगवदपरोक्षज्ञानभोगाभ्यांनिवृत्तसमस्तकर्माणः

स्वोत्तमप्रवेशेनब्रह्मनाड्योत्क्रमणेनवापरित्यक्तदेहः     स्वोचितेनार्चिरादिनावापथावैकुंठलोकवासिनंभगवंतंहिरण्यगर्भेणसह
प्राप्ताभिन्नालिंगशरीराविध्वस्तप्रकृतयोत्यंतनिवृत्तानिष्टाः  सम्यगाविर्भूतानंदादिगुणाभगवत्समीपएवतमुपासीनाःस्वरूपेणवा
लीलागृहीतविग्रहैर्वासंकल्पमात्रसाध्यान्दिव्यभोगांस्तारतम्येनभुंजानानकदाचित्पुनरावर्तंतइत्येतन्मोक्षस्वरूप"मितिसुधया
ऽविरोधःसंपादनीयः । प्रसंगादावरणान्युच्यंते । सत्वादिरूपिणीभावरूपाविद्यैकं । यथोक्तंभागवते "बध्नंतिनित्यदामुक्तं
मायिनंप्रकृतेर्गुणाः" इति । कामोद्वितीयं । आवृत्तकामरूपेणेतिगीतागीतेः । तथाकामनिबद्धोयमितिभागवतेच । तृतीयं
प्रारब्धंकर्म । अनादिकर्मणाबद्धोजीवःसंसारमंडले । वासुदेवेच्छयानित्यंभ्रमतीतिहितद्धचइत्यनुव्याख्योक्तेः । प्रकृतिद्ध

ज्ञानाभावस्तुसर्वस्य । बोधनंचेतनस्य । सुखंप्रासतमसोविना । दुःखंदुःखास्पृष्टंविनेत्यादिद्रष्टव्यं ।

यंचचतुर्थंपंचमावरणं । अथान्येप्रकृतीइत्यादेः । लिंगशरीरंषष्ठमावरणं । एवंपंचविधंलिंगंत्रिवृत्षोडशविस्तृतमित्यादेः ।
हरीच्छाचसप्तममावरणं । यथोक्तंसुधायां "परमेश्वरोचिंत्ययाद्भुतयास्वशक्त्याजीवस्वरूपचैतन्यमाच्छादयती"ति । तथा
"आनंददश्चमुक्ताना"मित्यत्र "नन्वानंदश्चस्वरूपमेव । सचाविद्यावृतोऽविद्यानिवृत्तौस्वतःसिद्धएव । अतःकथंमोक्षदा
नात्पृथगानंददानं । उच्यते । परमेश्वरशक्तिरेवस्वरूपावरणमुख्या । अविद्यातुनिमित्तमात्रं । ततोऽविद्यायांनिवर्तमानायांसत्या
मपिनाशेवानंदाभिव्यक्तिर्यावदीश्वरःस्वकीयांबंधकशक्तिंनततोव्यावर्तयती"ति । नाविद्यैवजीवस्वरूपावरणंकिंत्वीश्वरेच्छा
पीतिप्रमेयदीपिकोक्तेः । तंत्रन्यायेनाज्ञानपदंज्ञानाभावपरंचेत्याह ॥ ज्ञानाभावइति ॥ नवनवसुविशेष नरमापिपदांगु

लीलसन्नखधूराजदनंतसद्गुणान् । श्रियोपिच । ज्ञानस्फूर्तिःसदेत्यादेरमायाअपिज्ञानाभावसंभवात्सर्वस्येत्युपपन्नं । बोधनं परोक्षमपरोक्षंच । दुःखास्पृष्टं रमातत्वं । ननु विनाशब्दयोगेकथं "प्राप्ततमसः दुःखास्पृष्ट"मित्युभयत्रद्वितीया । पृथग्विनानानाभिस्तृतीयान्यतरस्यामित्यत्रतृतीययासहपंचम्याएवविकल्पनादितिचेन्न । एनपाद्वितीयेतिपूर्वसूत्राद्वितीयेत्यनुवर्तते । तथाच पृथग्विनानानाभिस्तृतीया । तदभावेपंचमी । तदभावेद्वितीयेतिविकल्पकरणादिष्टसिद्धेः । यथोक्तंसिद्धांतकौमुद्यांपृथगित्यादिसूत्रमुदाहृत्य "एभिर्योगेतृतीयास्यात्पंचमीद्वितीयेच । अन्यतरस्यांग्रहणंसमुच्चयार्थं । पंचमीद्वितीयेअनुवर्तेते"इत्यादि । विवृतंचतत्वसुबोधिन्यां । तथाहि "ननु तृतीयाभावपक्षेएनपाद्वितीयेतिप्रकृताद्वितीयैवस्यात् । यदितु द्वितीयाविकल्पेनभवेत्तदापंचम्यपिस्यात् । सातुनित्यैव । तस्माद्विभक्तित्रयसमावेशोदुरुपपादइत्यतआह । अन्यतरस्यांग्रहणंसमुच्चयार्थमिति । निपातानामनेकार्थत्वादितिभावः ॥ पंचमीति ॥ तत्रमंडूकप्लुत्यापंचमी । द्वितीयातुसंनिहितैव । इहपृथगर्थैरितिसूत्रयितव्येपर्यायत्रयोपादानंतत्पर्यायांतरनिवृत्त्यर्थं । तेनहिरुग्देवदत्तस्येत्यत्रनेत्याहु"रिति । ननुतर्ह्युपासनापादीय "ज्ञानसूर्यमृते"इतिमूलव्याख्यापरविनावातमित्यादिप्रयोगदर्शनाद्विनायोगइवऋतेयोगेपिद्वितीयाभवत्वेवेतिसुधायांप्रयोगोपरिहारः । तथैवतद्व्याख्यास्वनेकासुव्याख्यानं । तथाहिवाक्यार्थचंद्रिका । नन्वन्यारादितरर्तेदिक्छब्दांचूत्तरपदाजाहियुक्तइतिऋतेशब्दयोगेपंचमीविधानाद्दृतेदेवदत्तादितिप्रभृतिवज्ज्ञानसूर्याद्दृतइतिपंचम्याभवितव्यं । ज्ञानसूर्यमृतइतिद्वितीयातुकथमित्यतो विनावातंविनावर्षंविद्युत्प्रपतनंविना । विनाहस्तिकृतंदोषंकेनेमौपतितौद्रुमावितिविनाशब्दयो

गेद्वितीयाविधिस्तावत्परस्यापिसंमतः । अतएवोक्तंवृत्तौ पृथग्विनानानाभिरितियोगविभागःकार्योद्वितीयार्थइति । उक्तंच हरदत्तेनापि "अत्रासत्यपिमुनित्रयवचनेप्रयोगबाहुल्यादेवंव्याख्यात"मिति । तथा "ऋतेशब्दयोगेपिद्वितीयाविधिरवश्य मभ्युपगंतव्यः । तन्निमित्तस्य ऋतेपित्वांनभविष्यंतिसर्वेइतिऋतेयोगेद्वितीयाप्रयोगस्यसद्भावादित्याशयेनाह । विनावात मित्यादीति । आचार्याअपि "ननुसूर्यमितिकथंद्वितीया । विनावातमित्यादिप्रयोगात् । पृथग्विनानानाभिरितियोग विभागःकर्तव्योद्वितीयार्थइतिकाशिकायामुक्तत्वेनविनायोगेतावद्द्वितीयाविधिरवगम्यते । एवंतात्पर्येऋतेशब्दयोगेपिद्विती यावक्तव्या । ऋतेपित्वांनभविष्यंतिसर्वेइत्याद्यभियुक्तप्रयोगेऋतेयोगेपिद्वितीयायादृष्टत्वेनन्यायसाम्यादितिभाव"इतिविभा वितवंतः । परिमलेपि "ज्ञानसूर्यइतिकथं । द्वितीयस्यतृतीयपादे अन्यारादितरर्तेदिक्छब्दांचूत्तरपदाजाहियुक्तइतिसूत्रे ऋतेशब्दयोगेपंचमीविधानेन ज्ञानसूर्यादृतइतिभाव्यं । एवंबादरायणादपीतीत्यतआह । विनावातमित्यादीति । वृत्त्यादौ अन्यारादितिसूत्रादुपरितने पृथग्विनानानाभिरितियोगविभागःकर्तव्यः । पृथगादिशब्दयोगेद्वितीयाचविभक्तिर्भवती त्येतदुक्त्वा विनावातमित्याद्युदाहृत्य तथाचतत्रप्रयोगानुरोधेनयोगविभागेनद्वितीयायानिर्वाहइव महाकविप्रयोगादृतेशब्द योगेपिद्वितीयाध्येया । ऋतेशब्दस्यापि पृथग्विनांतरेणवर्ततइतिविनाशब्दपर्यायत्वादितिभाव"इति । शब्देंदुशेखरेलघौ, गुरौच "समुच्चयार्थमिति । स्पष्टंचैतद्भाष्ये । एतेन अन्यतरस्य आं इत्यंगीकारार्थकंपदद्वयमेतदित्यपास्त"मिति । "समुच्चयार्थमिति । निपातानामनेकार्थत्वादितिभावः । स्पष्टंचेदंभाष्ये । एतेन अन्यतरस्य आं अंगीकारार्थकंपदद्वय

मेतत् । यद्वा सप्तम्येकवचनमित्यपास्तं । पंचमीद्वितीयेइति । तत्रमंडूकप्लुत्यापंचमी । द्वितीयातुसंनिहितैव । नचानंतराद्वितीयैवसमुच्चीयेतेतिवाच्यं । पृथग्विनानानाभिः । तृतीयेतियोगद्वयेनैवसिद्धेऽन्यतरस्यांग्रहणस्यवैयर्थ्यापत्तेः । एतेनपंचम्याएवसमुच्चयःस्यादित्यपास्तं । षष्ठ्यतसर्थेत्यस्य, एनपेत्यस्यचस्थलांतरेकर्तुंशक्यत्वेन योगविभागेनैवसिद्धेः । विभक्तिद्वयोच्चारणेनैवसिद्धेन्यतरस्यामितिवैयर्थ्यस्यस्पष्टत्वाच्च । यद्यपिद्वितीयासमुच्चयोभाष्यादौनोक्तः तथापिविनावातंविनावर्षकेनेमौपतितौद्रुमावित्यादिप्रयोगबाहुल्यादेवंव्याख्यातमित्याहुः । नचान्यतरस्यांग्रहणस्यसमुच्चयार्थत्वेमानाभावः । विकल्पार्थत्वपक्षेपिषष्ठीसाधनेतस्यचरितार्थत्वादितिवाच्यं । अन्यतरस्यांग्रहणसामर्थ्यात्पंचमीभविष्यतीतिभाष्यादिप्रामाण्येनसमुच्चयार्थत्वांगीकारा"दिति । समुच्चययोगविभागोभयपक्षस्यापिसंग्रहाद्वृत्त्यादौयोगविभागइत्युक्तत्वात्सर्वत्राप्यंततोगत्वाप्रयोगादित्युक्तेष्टीकाकृद्भिःप्रयोगएवोपात्तइतिनविरोधः । समुच्चयपक्षेसत्यप्यभ्युच्चयपक्षोयमितिनकश्चिद्विरोधः । नचटिप्पण्यांपर्यायत्वकथनंपूर्वोक्ततत्वसुबोधिनीविसंवादीतिवाच्यं । शब्देंदुशेखरे "दृशिग्रहणाद्दृतेशब्दयोगेद्वितीये"त्युक्त्वा "पुरुषाराधनमृतइत्यादिसिद्धि"रित्युक्तेःप्रयोगेसतिदृशिग्रहणाद्वितीयाभवतीत्यभिप्रायात् । योगेसति "उभसर्वतसोःकार्याधिगुपर्यादिषुत्रिषु । द्वितीयाऽऽम्रेडितांतेषुततोन्यत्रापिदृश्यत"इत्युपर्यादिशब्दैर्योगेद्वितीयेतिसंभवान्नहिरुग्देवदत्तस्येत्यत्रातिप्रसक्तिरिति नटिप्पणीनांतद्विरोधइत्यलं । पूर्वमेवकारस्यविष्णुशब्देनान्वयःकृतः । तत्प्रयोजनमिदानीमुद्बोधयति ॥

पदार्थानामिति ॥ अन्यतः ब्रह्मादितः । प्रतीयते आपाततः । तदुपपादयति ॥ सकलेति ॥ जडाजडप्रपंचसत्तादेः । तदधीनत्वात् विष्णवधीनत्वात् । तद्वस्तु ब्रह्मादिरूपं । निमित्तमात्रं नतुस्वतंत्रं । तर्हिब्रह्मादीनांस्रष्टृत्वप्रतिपादकागमानांकागतिरितिचेन्न । ब्रह्मणिस्थोसृजद्विष्णुःस्थित्वारुद्रेत्वभक्षयत् । पृथक्स्थित्वाजगत्पातितद्ब्रह्माद्याह्वयोहरिः । ब्रह्मणिब्रह्मरूपोसौशिवरूपीशिवेस्थितः । सब्रह्मणाविसृजतिसरुद्रेणविलापयति । निमित्तमात्रमीशस्यविश्वसर्गनिरोधयोः । हिर

पदार्थानांसृष्ट्याद्यन्यतोपिप्रतीयते । अतएवेत्युक्तं । सकलसत्तादेस्तदधीनत्वात्तत्
द्वस्तुनिमित्तमात्रमेव । स्वातंत्र्येणविष्णुरेवास्येश्वरइति ॥ पद्मापद्मासनानंतप्रभृतीदंय
दिच्छया । सत्तादिलभतेदेवःप्रीयतांश्रीपतिःसमे ॥ इतिश्रीमदानंदतीर्थभगवत्पादा
चार्यविरचिततत्वसंख्यानविवरणंजयतीर्थभिक्षुविरचितंसंपूर्णं ॥ कृष्णार्पणमस्तु ॥

ण्यगर्भःशर्वश्चकालाख्यारूपिणस्तवे''त्यादिप्रमाणादितिभावः । एवंसमापितग्रंथोभगवांष्टीकाकारएतत्प्रकरणप्रतिपादितगुणवत्त्वेनभगवंतंस्तुवन् एतत्प्रकरणविवरणफलत्वेन स्वस्यैकांतभक्तत्वमविदुषोजनाञ्जननीतनयमिवबोधयंस्तत्प्रीतिमाशास्ते पद्मेति ॥ पद्मा लक्ष्मीः । पद्मासनो ब्रह्मा । लक्ष्मीःपद्मालयापद्मा विरिंचिःकमलासनइत्युभयत्रश्चामरः । अनंतः शेषः । शेषोनंतइत्यमरः । तएवप्रभृतयोयस्यतत्तथा । इदं विश्वं । सत्ता असतःकार्यरूपेणभवनस्यैवजनित्वाज्जनिःसत्ताशब्देन

गृह्यते । तथाचसाआदिर्यस्यसृष्ट्याद्यष्टकस्यतत्तथा । लभते प्राप्नोति । सदेवः क्रीडादिगुणकः श्रीपतिः मे प्रीयतां प्रसी
दतु । श्रीहरिप्रिया । श्रीपतिःपुरुषोत्तमइतिसोपयुक्तामरामरः । ननु पद्माप्रभृतीत्येवोक्तौसर्वलाभेकिमर्थंपद्मासनानंतग्र
हणं । यदिदुःखस्पृष्टतदस्पृष्टभेदाख्यावांतरविशेषसूचनायतद्ग्रहः तर्हिपद्मापद्मासनप्रभृतीत्येवमुखतोवाच्यंस्यात् । नवा
च्यंचानंतेति । अथतत्तद्व्यक्तिग्रहोपेक्षितइत्युपादानं । हंततर्हिपुरुषायुषादपर्यवसानंस्यात् । तस्मात्कथमेतदितिचेन्न ।
केचिदनंतविष्वक्सेनादीन्नित्यादुःखानाचक्षते । तन्मतमतंद्रितःपराकर्तुमनंतमानंतेतिसमाधिसंभवात् । तर्हिपूर्वानुपूर्व्या
"गरुडानंतविष्वक्सेनादी"नितिगरुडस्यैवप्रथमंग्रहणादत्रयदितन्मततोदआवश्यकस्तर्हिगरुडएवादौनिर्देश्यइतिचेन्न । कश्चि
दविपश्चिदपश्चिमोबलमलपद्दशावतारांहिलंकलयतइति । तन्निराकर्तुमपारमतिर्जग्राहतदात्मकमनंतंयतोतइति । नचाष्ट
पद्यांहलमित्यादिनोक्तःकृष्णएव । नचतस्यहलधरत्वंकथमितिवाच्यं । सहस्रनाम्नि "वनमालीहलायुध"इत्युक्तहलधररू
पाभिन्नत्वेनतस्योपपन्नत्वादितिवाच्यं । दशाकृतिकृतेकृष्णायतुभ्यंनमइतिकृष्णस्यपृथग्ग्रहणविरोधापत्तेः । अथवा पद्माप
द्मासनादयोभवंतुतदधीनाअमुक्ताः । मुक्तस्तु "निरंजन"इत्यादिश्रुतेर्नतदधीनाइत्यतःप्रायोज्यनंतेति । ततश्च पद्मापद्मा
सनौ अनंतौ अबद्धौ मुक्तावितियावत् । अनंतौपद्मापद्मासनौ । कडाराःकर्मधारयइतिविशेषणस्यपरनिपातः । तौप्रभृती
यस्यतत्तथा । रमायानित्यमुक्तायाब्रह्मादीनामपिमुक्तानांतदधीनत्वे "उतामृतत्वस्येशानः सर्वंतत्प्रज्ञानेत्रं द्वावेतौनित्य
मुक्तौ । अव्यक्तात्पुरुषःपरः । श्रीर्यत्ररूपिण्युरुगायपादयोः चरणरजउपास्तेयस्यभूतिर्वयंकाः ।" इत्याद्यागमाद्द्रष्टव्याः ।

अतिबंधनइतिधातोरंतेतिरूपं । श्रीपतिः । श्रीमंगलदेवतेत्यशेषमतिमंगलं ॥ नशाब्दीनाम्नायीनहिममचमैमांस्यपिमतिर्न
वाताकींकार्ष्णीकिमपिचलपन्वाचपलधीः । यदात्तत्तैश्रेयोभिधविधिकलत्रोरुकरुणोगुरूणांकारुण्यादभवमितिमान्योधिध
रणि ॥ १ ॥ यथास्थालीस्वस्थंसरसमरसंवेत्तिनसदाभ्रमंतीसौदीदर्व्यपिनफललाभास्तदपरे । तदीयोदाहादिःस्खलनक
लितोमंतुरपिमेष्यनेनाप्तंनैनःफलमलघुयायाद्दतवरः ॥ २ ॥ साहंतोहंनातनवंनचभूविबुधाबुधः । तन्नमंतुःकिंतुवित्ताचि
त्तशुध्याइतिस्थितिं ॥ ३ ॥ व्यासरामनृसिंहार्ववदनागुरुहृद्गताः । संस्थानकुलदेवेष्टदेवाःप्रीणंत्विदंकृतेः ॥ ४ ॥ यादवा
र्याराधकश्रीमुद्गलार्यहृदब्जगः । श्रीनिवासोदाशरथिर्धिनोत्वेतत्सपर्यया ॥ ५ ॥ क्वटीकाकारसद्वाणीवाणीड्वाचानुसारिणी ।
क्वजाल्मोवाग्दरिद्रोहमितिमेसाहसंमहत् ॥ ६ ॥ इयंमान्याऽवन्यांसजयजयवाचंयमवचोनुसारानिःसाराभणितिरपिमेयाद्वि
दभिधैः । यथालाक्षारूक्षामणिगणसमासक्तिसहितामहीयोभिर्मूर्ध्नाध्रियतइतिसत्संगमहिमा ॥ ७ ॥ इतिश्रीमत्सत्यवरच
रणोपसदसत्यधर्मयतिकृतंतत्वसंख्यानटिप्पणंसमाप्तं ॥

इदं पुस्तकं कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण मुंबय्यां निर्णयसागरमुद्रणयंत्रे मुद्रापितं
शके १८३६ आनन्दनामसंवत्सरे माघमासे ।

Published by T. R. Krishnacharya Proprietor, Madhva Vilas Book Depot, 151 Solayappa Mudali Street, KUMBAKONAM.
Printed by Ramchandra Yesu Shedge, at the Nirnaya-Sagar Press, 23, Kolbhat Lane, BOMBAY.

